क्षनाशन इति। अक्षाणीन्द्रियाण्युच्यन्ते। चक्षुरादीन्यपि नाशयति सोऽक्षनाशन इन्द्रियोपरोधी रोगोऽनुपक्रमो यः शीघ्रमिन्द्रियविघातकृत्। एवं पुरा परीक्ष्य व्याधिचिकित्सामारभेत। अन्यथाऽवश्यं स्वार्थादिहानिमवाप्नुयाद्वैद्यः। तथा च ग्रन्थः—"व्याधिं पुरा परीक्ष्यैवमारभेत ततः क्रियाम्। स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात्"।

साध्यलक्षणयुक्तोऽप्यातुरो नोपक्रमणीय इति दर्शयति।

**त्यजेदार्तं भिषग्भूपैर्द्विष्टं तेषां द्विषं द्विषम्॥ ३३॥**
**हीनोपकरणं व्यग्रमविधेयं गतायुषम्।**
**चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम्॥ ३४॥**

एवंविधमार्तमातुरमुपक्रम्यमपि त्यजेत्परिहरेत्। भिषग्भूपैर्द्विष्टं भिषग्भिस्तथा भूपै राजभिर्द्विष्टम्। वैद्या राजानश्च यं द्विषन्ति। तथा तेषां द्विषं शत्रुं भिषग्भूपान्यो द्वेष्टि तमपि त्यजेत्। द्विषं शत्रुं चात्मनः। हीनोपकरणमिति। उपकरणविकलं हीनचिकित्साङ्गम्। व्यग्रं कार्यबहुलमन्यकार्यापेक्षिणं कार्यान्तरासक्तचेतसम्। अविधेयं भिषजस्तदाज्ञां यो न करोति तमपि त्यजेत्। गतायुषं परिक्षीणजीवितम्। चण्डं सहसापकारकरणबुद्धिं क्रूरकर्माणम्। शोकातुरं स्त्र्यादिविरहोत्थेन शोकेन शुचार्तम्। भीरुं सभयम्। कृतघ्नं यः कृतोपकारोऽप्यपकारं करोति। वैद्यमानिनं अवैद्योपि यो वैद्यमिवात्मानं मन्यते नैवौषधं करोति मूढस्तमपि त्यजेत्।

एवं च प्रथमेऽध्याये सकलतन्त्रार्णवस्य तात्पर्यं व्याख्यातमनन्तरं सुखस्मरणार्थमध्यायनामसंग्रह उच्यते।

**तन्त्रस्यास्य परं चातो वक्ष्यतेऽध्यायसंग्रहः।**

तन्त्र्यन्ते धार्यन्तेऽनेनायुर्वेदार्था इति तन्त्रम्। अध्यायानां संग्रहः संक्षेप एकत्र राशीकरणमतोऽनन्तरं सुखस्मरणाय मया वक्ष्यते।

**आयुष्कामदिनर्त्वीहारोगानुत्पादनद्रवाः॥ ३५॥**
**अन्नज्ञानान्नसंरक्षामात्राद्रव्यरसाश्रयाः।**
**दोषादिज्ञानतद्भेदतच्चिकित्साद्युपक्रमः॥ ३६॥**
**शुद्ध्यादिस्नेहनस्वेदरेकास्थापननावनम्।**
**धूमगण्डूषदृक्सेकतृप्तियन्त्रकशस्त्रकम्॥ ३७॥**
**शिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मकाः।**
**सूत्रस्थानमिमेऽध्यायास्त्रिंशत् शारीरमुच्यते॥ ३८॥**

इमे पूर्वोक्तास्त्रिंशदध्यायाः सूत्रस्थानमुक्तम्। आयुष्कामश्च दिनर्त्वीहे च रोगानुत्पादनं च द्रवश्चेति द्वन्द्वः। ईहा चर्या चेष्टेत्येकोऽर्थः। तेन आयुष्कामीयो दिनचर्या ऋतुचर्या रोगानुत्पादनीयो द्रवद्रव्यविज्ञानीयोऽन्नस्वरूपविज्ञानीयोऽन्नसंरक्षा मात्राशितीयो द्रव्यादिविज्ञानीयो रसभेदीयो दोषादिविज्ञानीयो दोषभेदीयो दोषोपक्रमणीयो द्विविधो-

पक्रमणीयः शोधनादिगणसंग्रहः स्नेहविधिः स्वेदविधिर्वमनविरेचनविधिर्बस्तिविधिर्नस्यविधिर्धूमविधिर्गण्डूषविधिराश्चोतनाञ्जनविधिस्तर्पणपुटपाकविधिर्यन्त्रविधिः शस्त्रविधिः शिरा व्यधविधिः शल्याहरणविधिः शस्त्रकर्मविधिःक्षाराग्निकर्मविधिः। सूचनात्सूत्रम् सूच्यतेऽनेन सकलस्तन्त्रार्थ इति सूत्रस्थानं सकलस्य तन्त्रस्य शिरःस्थानीयम्। अधुना शारीरमुच्यते । शारीरं शारीरस्थानमुच्यते । किंस्थानमध्यायसंग्रहः ।

के पुनस्ते—

**गर्भावक्रान्ति तद्यापदङ्गमर्मविभागिकम्।**
**विकृतिर्दूतजं षष्ठम्**

तत्र गर्भावक्रान्तिशारीरम् । तस्य व्यापत् तस्येति गर्भपरामर्शः । गर्भव्यापच्छारीरम् । अङ्गविभागं शारीरम् । मर्मविभागं शारीरम् । विकृतिविज्ञानं शारीरम् । दूतविज्ञानीयं शारीरम् । एवमेते षडध्यायाः शारीरस्थानम् ।

निदानमुच्यते—

**निदानं सार्वरोगिकम् ॥ ३९ ॥**
**ज्वरासृक्श्वासयक्ष्मादिमदाद्यर्शोऽतिसारिणाम् ।**
**मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च ॥ ४० ॥**
**पाण्डुकुष्ठानिलार्तानां वातास्रस्य च षोडश ।**

सर्वरोगनिदानम् । ज्वरनिदानम् । रक्तपित्तकासनिदानम् । श्वासहिक्कानिदानम् । राजयक्ष्मादिनिदानम्। मदात्ययादिनिदानम् । अर्शोनिदानम्। अतिसारग्रहणीदोषनिदानम् ।मूत्राघातनिदानम् । प्रमेहनिदानम् । विद्रधिवृद्धिगुल्मनिदानम् ।] उदरनिदानम् । पाण्डुशोफविसर्पनिदानम् । कुष्ठश्वित्रकृमिनिदानम्। वातव्याधिनिदानम्। वातशोणितनिदानम् । इत्येवं षोडशाध्याया निदानस्थानम् ।

चिकित्सितमुच्यते—

**चिकित्सितं ज्वरे रक्ते कासे श्वासे च यक्ष्मणि ॥ ४१ ॥**
**वमौ मदात्ययेऽर्शःसु विशि द्वौ द्वौ च मूत्रिते।**
**विद्रधौ गुल्मजठरपाण्डुशोफविसर्पिषु ॥ ४२ ॥**
**कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम् ।**
**द्वाविंशतिरिमेऽध्यायाः कल्पसिद्धिरतःपरम् ॥ ४३ ॥**

चिकित्सितस्थानं द्वाविंशतिरध्यायाः । ज्वरचिकित्सितम् । रक्तपित्तचिकित्सितम् । कासचिकित्सितम् । श्वासहिक्काचिकित्सितम् । राजयक्ष्मचिकित्सितम् । छर्दिहृद्रोगतृष्णाचिकित्सितम् । मदात्ययचिकित्सितम् । अर्शश्चिकित्सितम् । अतीसारचिकित्सितम् । ग्रहणीचिकित्सितम् । मूत्राघातचिकित्सितम् । प्रमेहचिकित्सितम् । विद्रधिवृद्धिचिकित्सितम् । गुल्मचिकित्सितम् । उदरचिकित्सितम् । पाण्डुरोगचिकित्सितम् । श्वयथुचिकित्सितम् । विसर्पचिकित्सितम् । कुष्ठचिकित्सितम् ।

श्वित्रकृमिचिकित्सितम्। वातव्याधिचिकित्सितम्। वातशोणितचिकित्सितम्। इमे द्वाविंशतिरध्यायाश्चिकित्सितस्थानम्। अत ऊर्ध्वं कल्पस्थानम्।

**कल्पो वमेर्विरेकस्य तत्सिद्धिर्बस्तिकल्पना।**
**सिद्धिर्बस्त्यापदां षष्ठो द्रव्यकल्पोऽत उत्तरम्॥ ४४॥**

अत्र कल्पे वमनकल्पः विरेचनकल्पः। वमनविरेचनव्यापत्सिद्धिः। बस्तिकल्पः। बस्तिव्यापत्सिद्धिः। षष्ठो भेषजकल्पः इत्येवं षडध्यायाः कल्पसिद्धिस्थानम्। अत उत्तरं अतोऽस्मात्कल्पसिद्धिस्थानादूर्ध्वमुत्तरतन्त्रम्।

**बालोपचारे तद्व्याधौ तद्ग्रहे द्वौ च भूतगौ।**
**उन्मादेऽथ स्मृतिभ्रंशे द्वौ द्वौ वर्त्मसु सन्धिषु॥ ४५॥**
**दृक्तमोलिङ्गनाशेषु त्रयो द्वौ द्वौ च सर्वगौ।**
**कर्णनासामुखशिरोव्रणे भङ्गे भगन्दरे॥ ४६॥**
**ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग्द्वयम्।**
**विषे भुजङ्गे कीटेषु मूषकेषु रसायने॥ ४७॥**
**चत्वारिंशोऽनपत्यानामध्यायो बीजपोषणः।**

बालोपचरणीयः। बालामयप्रतिषेधः। बालग्रहप्रतिषेधः। भूतविज्ञानीयः। भूतप्रतिषेधः। उन्मादप्रतिषेधः। अपस्मारप्रतिषेधः। वर्त्मरोगविज्ञानीयः। वर्त्मरोगप्रतिषेधः। सन्धिसितासितरोगविज्ञानीयः। सन्धिसितासितप्रतिषेधः। दृष्टिरोगविज्ञानीयः। तिमिरप्रतिषेधः। लिङ्गनाशप्रतिषेधः। सर्वाक्षिरोगविज्ञानीयः। सर्वाक्षिरोगप्रतिषेधः कर्णरोगविज्ञानीयः। कर्णरोगप्रतिषेधः। नासारोगवि०। नासारोगप्र०। मुखरोगवि०। मुखरोगप्र०। शिरोरोगविज्ञा०। शिरोरोगप्र०। व्रणविज्ञानीयप्रति०। सद्योव्रणप्रति०। भङ्गप्रति०। भगन्दरप्रति०। ग्रन्थ्यर्बुदश्लीपदादिवि०। ग्रन्थ्यर्बुदादिप्रति०। क्षुद्ररोगवि०। क्षुद्ररोगप्र०। गुह्यरोगवि०। गुह्यरोगप्रति०। विषप्रति०। सर्पविषप्र०। कीटलूतादिविषप्र०। मूषिकालर्कविषप्र०। रसायनाध्यायः। वाजीकरणाध्यायः। इति। एवमेते चत्वारिंशदध्याया उत्तरतन्त्रम्। तदिति बालस्य परामर्शः। द्वौद्वाविति। वर्त्मनि द्वौ सन्धौ द्वौ यथासंख्येन त्रय इति। दृक्तमोलिङ्गनाशेषु प्रत्येकमेकैकः। ग्रन्थ्यादिक्षुद्ररोगगुह्यरोगेषु पृथग्द्वयं प्रत्येकं द्वौ द्वौ। अनपत्यानामप्रजानां पुंसां चत्वारिंशोऽध्यायो बीजपोषणः शुक्रवृद्धिहेतुरिति।

**इत्यध्यायशतं विंशं षड्भिः स्थानैरुदीरितम्॥ ४८॥**

इत्येवमनेन प्रकारेण सविंशमध्याशतं षड्भिः स्थानैः सूत्रशारीरनिदानचिकित्साकल्पसिद्ध्युत्तरतन्त्रैरुदीरितमिति भवेत्।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने आयुष्कामीयोऽध्यायः प्रथमः॥ १॥

# *द्वितीयोऽध्यायः।

## अथातो दिनचर्याध्यायं व्याख्यास्यामः।

अथेति सर्वेष्वध्यायेषु मङ्गलार्थः। माङ्गलिको ह्याचार्यः प्रत्यध्यायारम्भे मङ्गलार्थमथशब्दं प्रयुङ्क्ते। दिने दिने चर्या दिनचर्या। दिनस्य वा चर्या दिनचर्या। चरणं चर्या। उभयलोकहितमाहारचेष्टितं प्रतिदिने यत्कर्तव्यं तमध्यायं व्याख्यास्यामः। प्रस्तुतादायुष्कामीयादध्यायादनन्तरं कोऽस्य सम्बन्धः? उच्यते। यस्मादायुष्कामेण पुरुषेण यत्प्रधानमायुष्यं तदासेव्यं प्रथमतस्तदन्वयानि यान्यायुष्याणि। अतःप्रथमं तावदाचारप्रधानेन भवितव्यम्। यत आचारादायुर्लभ्यत इत्याचार्याः। यद्यप्यत्र रात्रिचर्याऽपि विहिता तथाऽपि प्राधान्याद्दिनचर्याऽस्मिन्नध्याये निर्दिष्टा। अतो दिनचर्याध्यायोऽयमुच्यते।

अस्मिंस्तन्त्रे आयुःपालनं प्रकृतम्। तद्द्विविधम्। स्वस्थवृत्तमातुरवृत्तं च। तत्र मङ्गल्यत्वात् स्वल्पवक्तव्यत्वादातुरोपयोगित्वाच्च स्वस्थवृत्तमेवादावुच्यते।

**ब्राह्मे मुहूर्त उत्तिष्ठेत्स्वस्थो रक्षार्थमायुषः।**

रात्रेश्चतुर्दशो मुहूर्तो ब्राह्मो मुहूर्तो विषुवति समरात्रिन्दिनेकाले द्विघटिकालक्षणः। मुहूर्तस्य चेह द्विघटिकोपलक्षणार्थत्वात्सर्वस्मिन् काले रात्रेश्चतुर्घटिकावशेषे समुत्थानं कार्यमिति स्थितम्। स्वस्थो नीरोगः कल्पः स आयुषो यथोपचरितस्य जीवितस्य रक्षार्थं ब्राह्मे मुहूर्त उत्तिष्ठदभ्युत्थानं कुर्यात्। मुहूर्तो नाडिकाद्वयम्। ब्रह्म ज्ञानं तदर्थमध्ययनाद्यपि ब्रह्म तस्य योग्यो मुहूर्तो ब्राह्मः पश्चिमयामस्य नाडिकाद्वयं तस्मिन् ब्राह्मे मुहूर्त उत्तिष्ठेत्। किम्भूतः। स्वस्थोऽनातुरः। "समदोषः समाग्निश्च समधातुमलक्रियः। प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते" इति स्वस्थलक्षणम्। किमर्थमुत्तिष्ठेत्। रक्षार्थमायुषो जीवितस्य। तदा ह्युत्तिष्ठतो व्याध्यलक्ष्म्याद्यभाव एवायुषो रक्षा भवति। आतुरेण धातुसाम्यार्थं स्वप्तव्यमेव।

---

* संक्षिप्ता मौद्गल्य टिप्पणी।

यदभावाद् भवं शून्यं निखिलं मन्यते जगत्।
स्वास्थ्य-रूपं वरं तस्मै कस्मैचिन्महसे नमः॥ १॥
अष्टाङ्गहृदये हृदयं वाग्भटस्य महात्मनः।
टिप्पणी व्याजयोगेन क्वचिद् व्यक्तं मिलिष्यति॥ २॥



निगमागमपारीणश्चिकित्साधुरीणश्च श्रीमानग्रजन्मा वाग्भटाचार्य्यः प्रथमाध्याये प्रायः समस्तमपि चिकित्सासंहितासंन्निविष्टं पदार्थजातं हृद्यैः परं स्वल्पैरेव पदैस्तद्व्याजहार। इदानीं पुनरात्महृदयेश्वरान् आत्रेयाग्निवेशचरकमुनीनादौ स्मृत्वापि तन्निर्दिष्टस्य त्रिस्कन्धायुर्वेदस्य स्वस्थातुरपरायणतां स्मरन्, गौरवात् स्वास्थ्यस्य महामूलभूतं दिनचर्य्यादिक्रममुपक्रमत इति॥







शरीरचिन्तां निर्वर्त्य कृतशौचविधिस्ततः ॥ १ ॥
अर्कन्यग्रोधखदिरकरञ्जककुभादिकम् ।
प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ॥ २ ॥
भक्षयेद्दन्तधवनं दन्तमांसान्यबाधयन् ।

शरीरस्य चिन्ता शरीरचिन्ता जीर्णाजीर्णनिरूपणादिका तां निर्वर्त्य ततो मूत्रपुरीषादेः कृतशौचविधानस्ततोऽनन्तरं दन्तधावनमर्कादिकं भक्षयेत् । संग्रहेऽप्युक्तम् । "ब्राह्मे मुहूर्त उत्तिष्ठेज्जीर्णाजीर्णं निरूपयन्" इत्यादि । अर्कः सूर्याह्वः । न्यग्रोधो यक्षावासः । खदिरो गायत्री । करञ्जश्चिरिबिल्वः । ककुभोऽर्जुनः । आदिग्रहणेन मालतीकरवीरादिग्रहः । कथं भक्षयेत् । दन्तानां मांसान्यबाधयन्नपीडयन् । प्रातः प्रत्युषसि भुक्त्वा दन्तधावनकाष्ठरसं भक्षयित्वा । मृद्वग्रं कूर्चिताग्रम् । तथा कषायकटुतिक्तकम् । रसत्रयेण ह्यनेन मुखवैशद्यारोचकश्लेष्मापनयाः सम्यक् सम्पद्यन्ते । अर्काद्युपादानादेव कषायादित्वे लब्धे कषायादिग्रहणं संग्रहादिगृहीतस्य संग्रहार्थं स्पष्टार्थं च । अर्कादिग्रहणमुदाहरणार्थं ज्ञेयम् । संक्षेपविवक्षया न दन्तधावनस्य गणसंग्रहः । द्वादशाद्यङ्गुलप्रमाणत्वं श्लेष्मातकाद्यनिष्टदन्तधावननिषेधश्च तन्त्रान्तरोक्तमपि नेहोक्तम् । सुश्रुतेनोक्तम्—"अजग्धमनुपक्लिष्टं षडष्टद्वादशांगुलम् । प्रदेशिनीमुखसमं मृदु स्याद्दन्तधावनम्" ।

नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती ॥ ३ ॥
तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ।

अजीर्णादीनां द्वन्द्वः । एतानि विद्यन्ते यस्येत्यत इनिठनाविति इनिः । एवं तृष्णास्येत्यादौ द्वन्द्वादिनिश्च । तद्दन्तधावनमजीर्णी न भक्षयेत् । एवं वमथ्वादीनां मत्वर्थीयान्तानां सम्बन्धो योज्यः ।

सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् ॥ ४ ॥

ततो दन्तधावनभक्षणानन्तरं सौवीराख्यमञ्जनं भजेत् । कस्माद् यतो हितमक्ष्णोः ।

चक्षुस्तेजोमयं तस्य विशेषात् श्लेष्मणो भयम् ।
योजयेत्सप्तरात्रेऽस्मात्स्रावणार्थं रसाञ्जनम् ॥ ५ ॥

अस्मात्कारणात्स्रवणार्थे सप्तरात्रे सति रसाञ्जनं दार्वीक्वाथसमुद्भवाख्यं योजयेत् । यस्माच्चक्षुस्तेजोमयमाग्नेयम् । यद्यपि पञ्चमहाभूतात्मकं सर्वमपि तथापि बाहुल्येन

---

मौ० टि०—(१) शरीरचिन्तां = स्वस्थशरीरविचारम् । निर्वर्त्य–निष्पाद्य । (२) प्रातः सूर्योदयकाले, तदानीं कफोद्रेकारम्भे कटुकादिरसविशिष्टस्य दन्तधावनस्य चर्वणघर्षणादि सुखावहं स्यादेव । (३) भुक्त्वेति दन्तधावनस्य मृद्वग्रं = कोमलपुरोभागं, भुक्त्वा = पूर्वं सम्यक्चर्वयित्वा । ततो भक्षयेद् दन्तघर्षणमार्जनादिक्रियां सम्पादयेदित्यर्थः । अत्र भुक्त्वेति पदस्य विद्वदरुणकृतोऽर्थस्तु पुनः परिवर्त्तितोऽपि सर्वथाऽसमञ्जसत्वाद् हेय एव ।

व्यपदेशात्तेजोमयमुच्यते। अत एव तद्रूपाण्यालोचयति। तथाच लोके कश्चिदाह नरपतिरेतीति'। न चासौ नराणामेव पतिः किंतर्हि नारीणामपीति। तस्य चक्षुषो वातपित्ताभ्यामपि भयमस्ति विशेषेण तु कफाद्भयं ततो रसाञ्जनं योजयेत्।

**ततो नावनगण्डूषधूमताम्बूलभाग्भवेत्।**

नावनादीनां नस्यादिविधिषु गुणा वक्ष्यमाणा विधानं च। ताम्बूलस्य तु वैशद्यारुचिहरत्वसौगन्ध्यादिगुणाः प्रसिद्धा एव। नावनादीनां ताम्बूलान्तानां द्वन्द्वः। ततोऽञ्जनादन्तरं नावनगण्डूषधूमताम्बूलानि भजते यः स एवंविधो भवेत्। भजो ण्विरिति ण्विः।

येषां तु ताम्बूलमपथ्यं तानाह।

**ताम्बूलं क्षतपित्तास्ररूक्षोत्कुपितचक्षुषाम्॥ ६॥**
**विषमूर्च्छामदार्त्तानामपथ्यं शोषिणामपि।**

क्षतं विद्यते येषां ते क्षताः। अर्शआदित्वादच्। एवं पित्तास्राः। उत्कुपितमभिष्यन्नं चक्षुरेकं द्वे वा येषां ते। ये च क्षताश्च पित्तास्राश्च रूक्षाश्चोत्कुपितचक्षुषश्च तेषामपथ्यमहितम्। तथा विषार्त्तानां मूर्च्छार्त्तानां मदार्त्तानां शोषिणां चेत्यपिशब्दस्यार्थः। शोषिणो राजयक्ष्मिणः।

तदेतत्सर्वं विधाय भोजनासन्ने कालेऽभ्यङ्ग आचरणीय इत्याह।

**अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा॥ ७॥**
**दृष्टिप्रसादपुष्ट्यायुःस्वप्नसुत्वक्त्वदार्ढ्यकृत्।**

अभ्यङ्गं नित्यं सततमाचरेत्। नित्यग्रहणं चोपलक्षणार्थम्। एकद्वित्रिदिनान्तरमपि यथोचितमाचरतोऽपि न दोषः। सोऽभ्यङ्ग आचर्यमाणो जरा च श्रमश्च वातश्च तान् हन्तीति क्विप्। तथा दृष्टीत्यादि। दृष्टेः प्रसादो वैमल्यं दृष्टिप्रसादः। शोभना चासौ त्वक् तस्या भावः सुत्वक्त्वम्। दृढस्य भावो दार्ढ्यम्। दृढादिभ्यः ष्यञ्। दृष्टिप्रसादादीनां द्वन्द्वः। तानि करोति योऽभ्यङ्गः स एवम्।

**शिरःश्रवणपादेषु तं विशेषेण शीलयेत्॥ ८॥**

तमभ्यङ्गं शिरःश्रवणपादेषु विशेषेणातिशयेन शीलयेदभ्यसेदिति वचनाच्चावश्यं न तथा सर्वशरीरेऽभ्यङ्गः कार्यो यथैतेषु शिरःश्रवणपादेषु। अत्र च पूर्ववदेकत्वाभावः।

अथैतदपवादमाह—

**वर्ज्योऽभ्यङ्गः कफग्रस्तकृतसंशुद्ध्यजीर्णिभिः।**

अभ्यङ्गो वर्ज्यो वर्जनीयः कफग्रस्तेन कृतसंशुद्धिनाऽजीर्णिना च।

**लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः॥ ९॥**
**विभक्तघनगात्रत्वं व्यायामादुपजायते।**

शरीरायासजननं कर्म व्यायामः। तस्मात्पञ्च गुणा लाघवादयो निष्पद्यन्ते।

विभक्तानि विभागेन स्थितानि घनानि गात्राणि यस्य स विभक्तघनगात्रस्तस्य भावस्तत्त्वमिति।

इदानीं येनासौ न कार्यस्तं दर्शयति।

**वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत्॥ १०॥**

वातपित्तामयी बाल आषोडशाद्वर्षाद् वृद्धः सप्ततेरूर्ध्वमजीर्णी च तं जह्यात्।

**अर्द्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः।**

तुरवधारणे। बलवद्भिः पुरुषैः स्निग्धभोजिभिरर्धशक्त्यैव निषेव्यो व्यायामः। प्राक् श्रमाद्व्यायामवर्जनं कार्यमित्यर्थः।

कदासौ विधातव्य इत्याह—

**शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा॥ ११॥**

हेमन्ते शिशिरे वसन्ते च सेव्यः। शीतवसन्ताभ्यामन्यदा मन्दमेव सेव्यः। मन्दमिति क्रियाविशेषणम्। क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च वक्तव्येति।

**तं कृत्वाऽनुसुखं देहं मर्दयेच्च समन्ततः।**

तं व्यायामं कृत्वा अनुसुखं यथा शरीरे बाधा न स्यात्तथा देहं मर्दयेत्। समन्ततः परितः।

**तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लमः॥ १२॥**
**अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते।**

अतिव्यायामतस्तृष्णादयो भवन्ति। तृष्णेति पृथक् पदम्। तेन तृष्णादीनां पदानामकृतसमासानां निर्देशो दोषदेशाद्यनुरोधेनैकस्य द्वयोस्त्रिचतुराणां बहुतराणां सर्वेषां चातिव्यायामव्यापत्त्वद्योतनार्थः।

अतिव्यायामप्रसङ्गेनातिजागरादीनामपि व्यापदो दर्शयति—

**व्यायामजागराध्वस्त्रीहास्यभाष्यादिसाहसम्॥ १३॥**
**गजं सिंह इवाकर्षन् भजन्नतिविनश्यति।**

व्यायामादीनां भाष्यान्तानां द्वन्द्वः। तान्यादिर्यस्य साहसस्य धनुराकर्षणादेस्तदेवम्। अयथाबलमारम्भः साहसं तद्भजन्सेवमानो विनश्यति। क इव। सिंह इव गजमतिमहावर्ष्माणमाकर्षन्नाक्रामन्यथा विनश्यति तथाऽयथाबलमारम्भेण व्यायामादिना नरो मार्यत इति।

**उद्वर्तनं कफहरं मेदसः प्रविलापनम्॥ १४॥**
**स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम्।**

उद्वर्तनस्य कफहरादयश्चत्वारो गुणाः।

**दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम्॥ १५॥**

---

मौ० टि० (१) अर्द्धशक्त्या बलार्द्धेन। बलार्द्धलक्षणन्तु—"हृदयस्थो यदा वायुर्वक्त्रं शीघ्रं प्रपद्यते। मुखं च लभते शोषं तद्बलार्द्धस्य लक्षणम्" इति।

**कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित् ।**

स्नानं दीपनं वृष्यमायुष्यं च भवति । ऊर्जा उत्साहः । बलं प्राणनम् । एते प्रददाति करोति यत्तदेवम् । कण्ड्वित्यादि । कण्ड्वादीनां द्वन्द्वः । एतान् जयति । स्नानस्य प्रभावादायुष्यत्ववृष्यत्वदीपनत्वानि बोद्धव्यानि । अथवा स्नानेन प्रहर्षो भवति । हर्षणत्वाच्च वृष्यत्वम् । तथा च वक्ष्यति । "यत्किंचिन्मधुरं स्निग्धं बृंहणं बलवर्धनम् । मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते" इति । यथा स्नानं जाठराग्नेर्बहिर्निर्गतानि रोमकूपाश्रितान्यर्चींषि रुद्ध्वान्तर्नयति ततश्चाग्नेः प्रबलत्वं कुर्वद् दीपनं सम्पद्यते । यथा शीतकाले शीतानिलस्पर्शसंरुद्धस्य जाठराग्नेः प्रबलत्वम् । बालादित्यस्तु व्याचष्टिष्ट । स्नानेन भ्राजकाख्यं त्वगाश्रितं पित्तमन्तः प्रविशदूष्माणं संवर्धयति तेन तद्दीपनम् । अत एव परिषेके जलमुष्णमिष्यते । यस्माच्छीतं निर्वापयति तेजो न देहस्यान्तः प्रवेशयति । शीतकाले यच्छीतानिलस्पर्शसंरुद्धस्याग्नेः प्रबलत्वं तत्काल एव तस्मिन् कालस्वाभाव्यादिति बोद्धव्यम् । तथा चान्यतौ शीते सति मन्दाग्नित्वमेव दृश्यते । यथा वर्षास्वग्निमान्द्यादेवान्तर्बहिर्वह्निसन्धुक्षणं भोजनं समुपदिष्टम् । तथा च मुनिः । " व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि । विशेषशीत " इत्यादि ।

**उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः ॥ १६ ॥**
**तेनैव चोत्तमाङ्गस्य बलहृत्केशचक्षुषाम् ।**

उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः प्राणकृत् । तेनैवोष्णोदकेनैवोत्तमाङ्गस्य शिरसः परिषेको विधीयमानः केशचक्षुषां बलहृत् । प्राण्यङ्गानां समाहार एव द्वन्द्व इत्यस्य प्रायिकत्वात्केशचक्षुषामित्युपपन्नमेव ।

स्नानं येषामपथ्यं तान् दर्शयितुमाह—

**स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ॥ १७ ॥**
**आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ।**

नेत्रे चास्यं च कर्णौ च तत्र रोगाः । अर्दितं च नेत्रास्यकर्णरोगाश्चातिसारश्च ते विद्यन्ते येषां त एवम् । तेषु गर्हितमहितम् । एवं शेषेषु योज्यम् । अर्दितादीनां द्वन्द्वस्ततो मतुप् । तेनार्दितादिमत्सु गर्हितमिति योज्यम् । एवं शेषेष्वपि ।

**जीर्णे हितं मितं चाद्यान्न वेगानीरयेद्बलात् ॥ १८ ॥**
**न वेगितोऽन्यकार्यः स्यान्नाजित्वा साध्यमामयम् ।**

जीर्णे सम्यक्परिणते पूर्व आहार अद्याद्भुञ्जीत । किमद्यात् ? हितं पथ्यम् । मितं मात्रया युक्तम् । पथ्यमपि ह्यतिमात्रं वा भुक्तं दोषाय स्यादतो मितम् । न वेगादित्यादि । वातविण्मूत्रादीनां सम्बन्धिनो वेगानुन्मुखीभूतानपि बलान्नेरयेन्न प्रवर्तयेत् । न वेगित इत्यादि । सञ्जातवातविण्मूत्रवेगस्तमकृत्वा नान्यकार्यः स्यात् । नान्यत्कार्यं कुर्यादित्यर्थः । नाजित्वेत्यादि । साधयितुं शक्यः साध्यस्तं रोगमजित्वा

नान्यकार्यः स्यादिति योज्यम् । स ह्युपेक्षितो दुःसाध्योऽसाध्यो वा स्यात् । साध्य-शब्दोपादानादसाध्यामयप्रतिपन्नो न नान्यकार्यश्चिकित्सानैष्फल्यादिति द्योतयति ।

**सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ॥ १९ ॥**
**सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ।**

सर्वभूतानामशेषप्राणिनां यस्मात्सुखार्थाः प्रवृत्तयः कर्माणि । मता अभि-प्रेताः सुखं च शर्माख्यं धर्माद्विना न भवति तस्मात्कारणाद्धर्मपरो धर्मप्रधानः स्यात् । धर्मादिति 'पृथग्विनेति' पंचमी ।

**भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः ॥ २० ॥**

कल्याणे शुभकर्मणि मित्राणि सहाया उपदेशादिना कल्याणमित्राणि तानि भक्त्या अदम्भमतिः सन् भजेत् । इतराणि कल्याणमित्रापेक्षयेतराणि पांप-मित्राणि तेभ्यो दूरगस्तद्वर्जनपरः । तत्सङ्गो हि दृष्टादृष्टानर्थकरः । दूरग इत्यस्मा-द्दूरे स्थितः ।

**हिंसा स्तेयान्यथाकामं पैशुन्यं परुषानृते ।**
**सम्भिन्नालापव्यापादमभिध्यादृग्विपर्ययम् ॥ २१ ॥**
**पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ।**

हिंसा प्राण्युपघातः । स्तेयं चौर्यम् । अन्यथाकामो निषिद्धकामसेवा पशुस्त्री-गमनादि । एतत्त्रिविधं कायिकं पापं कर्म । पैशुन्यं परेषां भेदकृद्वचनम् । परुष-मसृदुवचनम् । अनृतमसत्यवचनम् । सम्भिन्नालापोऽसम्बद्धप्रलपनम् । चतुर्विध-मेतद्वाचिकम् । व्यापादः प्राण्युपघातचिन्ता । अभिध्या परगुणाद्यसहिष्णुता । दृग्विपर्ययं शास्त्रदृष्टिवैपरीत्यं नास्तिकत्वादि त्रिविधमेतन्मानसम् । तदेतद्धिंसादि दशधा पापं कर्म कायवाङ्मानसैस्त्यजेन्न कुर्यादित्यर्थः ।

**अवृत्तिव्याधिशोकार्ताननुवर्तेत शक्तितः ॥ २२ ॥**

न विद्यते वृत्तिर्येषां तानवृत्तीन् । शक्त्या यथासामर्थ्यमनुकूलं गच्छेत् । तथा व्याधिना शोकेन चार्तांश्च ।

**आत्मवत्सततं पश्येदपि कीटपिपीलिकम् ।**

कीटान् पिपीलिकांश्चात्मवत्पश्येत् । स्वशरीरतुल्यानित्यर्थः । किमु सतोऽ-साधून्वा । कीटपिपीलिकमप्यात्मवत्पश्येदित्यपिशब्दस्यार्थः । कीटपिपीलिकमिति क्षुद्रजन्तव इत्येकत्वम् ।

**अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन् ॥ २३ ॥**

देवादीनां द्वन्द्वः । देवादीनर्चयेत् । वृद्धा ज्ञानवृद्धाः शीलतपोवृद्धाश्च । नृपो राजा । अतिथिरसमानग्रामी वैश्वदेवान्ते समुपस्थितः ।

**विमुखान्नार्थिनः कुर्यान्नावमन्येत नाक्षिपेत् ।**

अर्थिनो याचकान्प्रत्याख्यानेन विमुखान्न कुर्यात् । नावमन्येत नावमानयेन्न च

परुषवचनादिना क्षिपेत् परिभवेत् ।

**उपकारप्रधानः स्यादपकारपरेऽप्यरौ ॥ २४ ॥**

अरौ शत्रावपकारपरेऽपि सत्युपकारप्रधानः स्यात् । ननु रिपुरपकारक एव तत्किमपकारपर इति विशेषणेन। तथा च माघः—"उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा । उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः" । नहि सर्वदैवारिरपकारं कर्तुं शक्यः स्यात् किंतर्हि कदाचिदेव । हेत्वधीनत्वादपकारकारित्वस्य । वातादिदोषवत् । यथा वातादयो दोषा दूषणस्वभावा अपि सन्तः कदाचिद्विकारकत्वे समर्था भवन्ति कदाचिन्नैव । दोषत्वं सर्वदैव तेषाम् । तस्मादपकारपर इति युक्तं विशेषणम् । अपकारिण्युपकारकृत्स्यात् किं पुनरुपकारक इत्यपिशब्दार्थः ।

**सम्पद्विपत्स्वेकमना हेतावीर्ष्येत्फले न तु ।**

सम्पत्सु विपत्सु चैकमनाः समचित्तः। सम्पत्सु विषक्तेन विपत्सु विषादादिना न भाव्यमित्यर्थः । हेतावित्यादि । हेतौ कारणे ईर्ष्येत् । यथा । अयमेवं श्रुतत्यागादिगुणवान् कस्मादहमप्येवं न भवेयम् । फले नतु परकीये शोभने फले वस्त्रालङ्कारादिके नेर्ष्येत् ।

**काले हितं मितं ब्रूयादविसंवादि पेशलम् ॥ २५ ॥**

काले प्रस्तावे । हितं पथ्यम् । मितं न बहु । अविसंवादि सत्यम् । पेशलं मनोज्ञं ब्रूयात् ।

**पूर्वाभिभाषी सुमुखः सुशीलः करुणामृदुः ।**
**नैकः सुखी न सर्वत्र विश्रब्धो न च शङ्कितः ॥ २६ ॥**

पूर्वाभिभाषी पूर्वालापी स्यात् । सुमुखो गतभ्रुकुटिः । सुशीलः शोभनस्वभावः । तथा करुणया मृदुरार्द्रसन्तानो मातेव पुत्रे । एकोऽद्वितीयः सन्सुखी न स्यात् । तथा च भगवान् व्यासः—"मायाचारे मायया वर्तितव्य" मिति । तथा सर्वत्र मित्रस्वजनादिष्वपि शङ्कितोऽविश्वस्तो न स्यात्तेषां वैमुख्यदोषप्रसङ्गभयात् ।

**न कञ्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम् ।**
**प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः ॥ २७ ॥**

आत्मनः शत्रुं कञ्चिदपि न प्रकाशयेत् । तत्प्रकाशनाद्धि भेदः स्यात् । नात्मानं कस्यचिद्रिपुं प्रकाशयेत् । पूर्वोक्तादेव हेतोः । अपमानमसत्कारं कस्यचिन्न प्रकाशयेत् । प्रभोः स्वामिनः सम्बन्धिनीं निःस्नेहतां न प्रकाशयेत् । तत्प्रकाशनादसौ प्रभुर्जातावसरैर्भेदकैः सुतरां निःस्नेहीक्रियते ।

**जनस्याशयमालक्ष्य यो यथा परितुष्यति ।**
**तं तथैवानुवर्तेत पराराधनपण्डितः ॥ २८ ॥**

जनस्याशयमालक्ष्य लोकस्य अभिप्रायं बुद्ध्वा परिच्छिद्य यो जनो यथा परितुष्यति तथा तेनैव प्रकारेण दानप्रियवचनादिना तमनुवर्तेताराधयेत् । कीदृशो

भूत्वा । पराराधने पण्डितस्तज्ज्ञः ।

**न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत् ।**

इन्द्रियाणि रसनादीनि कदन्नाशनादिना न पीडयेन्न निगृह्णीयात् । न चैतानीन्द्रियाण्यतिलालयेदतिशयेन विलासयेत् ।

**त्रिवर्गशून्यं नारम्भं भजेत्तं चाविरोधयन् ॥ २९ ॥**

त्रयाणां धर्मार्थकामानां वर्गस्त्रिवर्गस्तेन शून्यं रहितमारम्भमुद्यमं न भजेन्न कुर्यात् । कथं भजेत् ? तं च त्रिवर्गमविरोधयन्परस्परमविरोधयन् ।

**अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमाम् ।**

सर्वधर्मेषु मध्यमां प्रतिपदं प्रतिपत्तिमनुयायात् सर्वेष्वाचारेषु मध्यमं मार्गमनुवर्तेत । नैकत्रासक्तिं कुर्यादित्यर्थः ।

**नीचरोमनखश्मश्रुर्निर्मलाङ्घ्रिमलायनः ॥ ३० ॥**

नीचान्यदीर्घाणि लोमनखश्मश्रूणि यस्य स एवंभूतो भवेत् । लोमानि बाहूरुप्रभृतिषु रोमाणि केशाश्चोच्यन्ते तथा च हृषेर्लोमस्वित्यत्र सूत्रे विवृतम् । लोमानि मूर्धजान्यङ्गजानि चेह गृह्यन्त इति । नीचलोमादिकफलं च मुनिनोक्तम्– "पौष्टिकं धन्यमायुष्यं शुचि रूपविराजनम् । केशलोमनखादीनां कृन्तनं सम्प्रसाधनमिति" । तथाङ्घ्री पादौ । मलायनानि घ्राणकर्णादीनि । निर्मलान्यङ्घ्रिमलायनानि यस्य स एवम् । अस्य च फलम्—"मेध्यं पवित्रमायुष्यमलक्ष्मीकलिनाशनम् । पादयोर्मलमार्गाणां शौचादानमभीक्ष्णशः" ।

**स्नानशीलः सुसुरभिः सुवेषोऽनुल्बणोज्ज्वलः ।**
**धारयेत्सततं रत्नसिद्धमन्त्रमहौषधीः ॥ ३१ ॥**

स्नानं शीलयति स्नानशीलो नित्यस्नायी स्यात् । तथा सुसुरभिः सुगन्धिः । शोभनो जीर्णमलिनवस्त्रादिविवर्जितो वेषो यस्य स सुवेषः । अनुल्बणोऽनुद्धतः सचासावुज्ज्वलश्चानुल्बणोज्ज्वलः । अनुद्धतवेषः स्यादुज्ज्वलश्चेत्यर्थः । धारयेदित्यादि । रत्नानि मणयो वज्रपद्मरागादयः । सिद्धमन्त्रोऽपराजितादिः । महौषधिः सहदेवादिका । रत्नादीनां द्वन्द्वः । रत्नादि बाहुग्रीवादिषु सततं सदैव धारयेत् ।

**सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ।**

युगमात्रदृग्विचरेद्भ्रमेत् । युगं हस्तचतुष्टयं तत्पश्यति यः स एवम् । एवं कुर्वन् सम्मुखमागच्छद्भिर्गवाश्वादिभिर्नोपद्रूयते । तथा सहातपत्रेण च्छत्रेण पदत्राणेन पदाधारपर्यायेण यो वर्तते स एवम् । पादत्रच्छत्रयोश्च गुणा उक्ताः–"मारुतस्यानुलोम्याय खुडस्तम्भश्रमापहम् । अन्वर्थसंज्ञं पादत्रं बलदृक्शुक्ररक्षणम् । वर्ण्यं नेत्रहितं छत्रं वातवर्षातपापहमिति" ।

**निशि चात्ययिके कार्ये दण्डी मौली सहायवान् ॥ ३२ ॥**

रात्रौ चात्ययिके कार्ये दण्डी सन् विचरेत्। दण्डेन सर्पादीनामुत्त्रासनमपि चोक्तम्—"स्खलतः सम्प्रतिष्ठानं शत्रूणां च निषेधनम्। अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणमिति"। मौली शिरोवेष्टनयुक्तः। अनेनोपरि पततां पतङ्गकीटादिमूत्रपुरीषादीनां रक्षा। तथा सहायवान्। अनेनापि चित्तावष्टम्भः। दण्डशब्दादत इनिठनाविती्निः। मौलिशब्दाच्च व्रीह्यादित्वात्तस्य ह्याकृतिगणत्वमिति केचित्। आत्ययिकमिति। अत्ययः कृच्छ्रं तस्मिन् भवमित्यध्यात्मादित्वाट्ठञ्।

**चैत्यपूज्यध्वजाशस्तच्छाया भस्मतुषाशुचीन्।**
**नाक्रामेच्छर्करालोष्टबलिस्नानभुवोऽपि च॥ ३३॥**

चैत्यस्तु विशिष्टदेवताधिष्ठितो लोकप्रसिद्धो वृक्षविशेषः। बुद्धालय इत्यन्ये। पूज्यो गुरुपुत्रादिः। ध्वजश्चिह्नम्। अशस्ताश्चण्डालादयः। एषां छायाः। तथा भस्म भूतिः। तुषो धान्यादित्वक्। अशुचिर्विट्। यद्वा उच्छिष्टं वस्तु। तदेतन्नाक्रामेत्। शर्कराः सूक्ष्मपाषाणाकृतिर्मृत्खण्डिका। तथा लोष्टं मृत्पिण्डादिखण्डः। बलिर्देवताद्यर्चनम्। स्नानं प्रसिद्धम्। बलिश्च स्नानं च बलिस्नाने तयोर्भुवौ बलिस्नानभुवौ। शर्करा लोष्टं च बलिस्नानभुवौ च ता नाक्रामेत्।

**नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत्।**
**सन्दिग्धनावं वृक्षं च नारोहेद् दुष्टयानवत्॥ ३४॥**

नदीं तरङ्गिणीं दोर्भ्यां न तरेत्। अग्निस्कन्धमभि अग्निराशेरभिमुखं न व्रजेत्। सन्दिग्धा चासौ नौश्च तां नारोहेन्नोच्चलेत्। सन्दिग्धायाः शिथिलबन्धनत्वाज्जर्जरत्वादतिभाराक्रान्तत्वात्पारगमनं प्रति सन्देहः। चेति समुच्चये। वृक्षं च नारोहेत्। कथम्। दुष्टयानवत्। यथा दुष्टयानमश्वादिकं नारोहेत् तथेति। दुष्टयानारोहणमपि चोक्त्यानया निषिद्धम्।

**नासंवृतमुखः कुर्यात्क्षुतिहास्यविजृम्भणम्।**

नासंवृतास्यः क्षुत्यादीन्कुर्यात्। हस्तादिना मुखं पिधाय कुर्यादित्यर्थः। क्षुतिश्छिक्का। हास्यं हसनम्। विजृम्भणं जृम्भिका। एषां समाहारद्वन्द्वः।

**नासिकां न विकुष्णीयान्नाकस्माद्विलिखेद्भुवम्॥ ३५॥**
**नाङ्गैश्चेष्टेत विगुणं नासीतोत्कटकस्थितः।**

नासां न विकर्षेत्। मलोत्सारणमात्रं तु कार्यमेवेति विशब्देन द्योतयति। अकस्मात्कारणं विना भुवं पृथ्वीं न विलिखेन्नोत्कर्षेत्। अङ्गैर्हस्तपादादिभिर्विगुणमननुगुणं यथा भवति तथा न चेष्टेत न व्याप्रियेत। उत्कटकं स्थितमवस्थानं यस्य स एवंभूतो नासीत। चिरं न तिष्ठेदित्यर्थः। अर्शोरोगाद्युत्पत्तेः।

**देहवाक्चेतसां चेष्टाः प्राक् श्रमाद्विनिवर्तयेत्॥ ३६॥**
**नोर्ध्वजानुश्चिरं तिष्ठेन्नक्तं सेवेत न द्रुमम्।**





देहादीनां द्वन्द्वः। एषां सम्बन्धिनीश्चेष्टाः क्रियाः श्रमखेदात् पूर्वं विनिवर्तयेत्। तावद्धनुराकर्षादि कुर्याद्यावन्नातीव श्रमः स्यादित्यर्थः। तथा ऊर्ध्वे जानुनी यस्य स ऊर्ध्वजानुश्चिरं नासीत। नक्तं रात्रौ द्रुमं तरुं न सेवेत। तदाश्रितकीटमूत्रशकृदादिपातरक्षार्थम्।

**तथा चत्वरचैत्यान्तश्चतुष्पथसुरालयान्॥ ३७॥**
**सूनाटवीशून्यगृहश्मशानानि दिवापि न।**

चत्वरं त्रिपथम्। अन्ये त्वाहुः। यत्र प्रदेशे नगरनिवासिनो ग्राम्या वा समेत्य नानाविधाः कथाः कुर्वन्ति स चत्वर उच्यते। चैत्यान्तश्चैत्यसमीपः। चतुष्पथं मार्गचतुष्टयसङ्गमः। सुरालयो देवगृहम्। एतांश्च नक्तं न सेवेत। सूना वध्यस्थानम्। अटवी निर्जनो देशः। शून्यगृहमुज्जटभवनम्। श्मशानं पितृवनम्। तानि दिवाऽपि न सेवेत। अपिशब्देन रात्रौ नितरामसेवनमाह।

**सर्वथेक्षेत नादित्यं न भारं शिरसा वहेत्॥ ३८॥**
**नेक्षेत प्रततं सूक्ष्मदीप्तामेध्याप्रियाणि च।**

आदित्यं सर्वथोद्यन्तमस्तं यान्तं प्रतिमागतं जलादर्शादिषु प्रतिबिंबितमुपरक्तं राहुग्रस्तं वा नेक्षेत। तथा भारं च शिरसा न वहेन्न नयेत्। प्रततमविरतं सूक्ष्मवस्तु नेक्षेत। दीप्तं चामेध्यं चाप्रियं चातिप्रततं नेक्षेत। ननु तर्हि सर्वथा नेक्षेतेत्यनेन कोऽर्थो यतो रविरपि दीप्तो दीप्तग्रहणेनैवास्य दर्शननिषेधः सिद्धः। अस्त्येवैतत् किन्तु सर्वप्रकारमादित्यं नेक्षेत। दीप्तं त्वनवरतं नेक्षेतेति।

**मद्यविक्रयसन्धानदानादानानि नाचरेत्॥ ३९॥**

विक्रयो विनिमयः। इयत्प्रमाणमधुनेदं दीयत इति। सन्धीयते येन तत्सन्धानमनेकद्रव्यसम्भारो येन तन्मद्यं यथावत्प्रमाणेन सन्धीयते। दानं यथाशास्त्रं स्वत्वनिवृत्तिः परस्वत्वापादनम्। आदानं च यथाशास्त्रमेव परस्माद्ग्रहणम्। एतेषां द्वन्द्वः। ततो मद्यशब्देन षष्ठीसमासः। मद्यविक्रयादीनि नाचरेत्। द्विजविषयं चैतद्वाक्यमिति बोध्यम्। सर्वस्य तु निषेधात् क्रयादिव्यवहारोच्छेदः स्यात्।

**पुरोवातातपरजस्तुषारपरुषानिलान्।**
**अनृजुः क्षवथूद्गारकासस्वप्नान्नमैथुनम्॥ ४०॥**

---

मौ० टी०—( १ ) स्वास्थ्य साधिकायां दिनचर्य्यायां स्वास्थ्य प्रदमद्यस्य सर्वथा निषेधे किं तात्पर्य्यमाचार्य्यस्य? किं द्विजाति धर्मः, अपरं वा किञ्चिदिति। नाद्यः, "परमं धर्मसाधनम्"। "न त्रिवर्णाद्विहीयत इत्यादि" स्वोक्ति विरोधाच्च। ( अष्टा० चि० ७ अ० ७५-६० श्लो० )। ततोऽपरं किं भवितुमर्हतीति? उच्यते—सर्वमेव पथ्यं वस्तु विधिनोपयुक्तं हि हितकरं भवति, तत्रापि मद्यन्तु विशेषविधि प्रयुक्तमेव। तथा विधिश्च सः, न सर्वजनसुलभः स्यात् प्रचुरवसुसाध्यत्वात्। तस्मात्सर्वथैव तद्वर्जनं श्रेयः स्यादिचार्य्याभिप्रायः।

**कूलच्छायानृपद्विष्टव्यालदंष्ट्रिविषाणिनः।**
**हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः ॥ ४१ ॥**
**सन्ध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिन्तनम्।**
**शत्रुसत्रगणाकीर्णगणिकापणिकाशनम् ॥ ४२ ॥**
**गात्रवक्त्रनखैर्वाद्यं हस्तकेशावधूननम्।**
**तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयम् ॥ ४३ ॥**
**मद्यातिसक्तिं विश्रम्भस्वातन्त्र्ये स्त्रीषु च त्यजेत्।**

त्यजेदिति क्रिया वक्ष्यमाणा। पुरःशब्दस्य वातातपाभ्यां प्रत्येकं सम्बन्धः। पुरोवातः पूर्वदिगागतो वातः। पुर आतपः पूर्वातपः। पुरोवातादीन्पञ्च त्यजेत्। अनृजुर्विषमस्थितशरीरः। क्षवथ्वादीन् षट् त्यजेत्। अनृज्विति क्रियाविशेषणमिति केचिद्व्याचक्षते। अन्नमत्र शाल्यादि। कूलं वप्रस्तच्छायां त्यजेत्। तत्र हि तिष्ठतस्तत्पाताद्भयं स्यात्। नृपद्विष्टं राज्ञोऽप्रियं त्यजेत्। व्यालो दुष्टहस्त्यादिः। दंष्ट्रिणः सर्पाद्याः। विषाणिनो गवाद्यास्तांस्त्यजेत्। हीनाः कुलशीलवित्तादिभिर्न्यूनाः। अनार्या असाधवः। अतिनिपुणा अतिगणनापरास्तेषां सेवां त्यजेत्। उत्तमैरिति सहार्थे गम्यमाने तृतीया। उत्तमैः सह विग्रहं त्यजेत्। सन्ध्यास्वभ्यवहारादीन्पञ्च त्यजेत्। शत्रुसत्रेत्यादि। शत्र्वशनं त्यजेत् सत्रं यज्ञस्तस्याशनं त्यजेत्। ऋत्विगादीन् वर्जयित्वाऽन्यस्य हि तदशनं निषेधति। तथाहि। यज्ञान्ते तदुद्भूतपापोपशमनाय प्रायश्चित्तं श्रूयते। गणाः कथकचारणादयस्तैराकीर्णं व्याप्तमशनं त्यजेत्। गणिका वेश्या तस्याः सम्बन्ध्यशनं त्यजेत्। तदशनाद्धि तत्पापसंक्रमणं स्यात्। पणिकः पणोपजीवी। नौद्यच इति ठन्। पणिको हि पापीयान्निन्दितपण्यादि विक्रीणानः प्रशंसतीत्यादिहेतोः। गात्रेत्यादि। गात्राण्यङ्गानि तैस्तथा वक्त्रेण नखैश्च वाद्यं त्यजेत्। हस्तावधूननं केशावधूननं च त्यजेत्। अवधूननं कम्पनम्। तोयेत्यादि। मध्यशब्दः प्रत्येकं युज्यते। तोययोर्द्वयोर्मध्येन यानं त्यजेत्। न यायादित्यर्थः। एवमग्न्योर्मध्येन। तथा पूज्ययोर्मध्येन। समासकरणात्तोयाग्न्योस्तोयपूज्ययोरग्निपूज्ययोरपि मध्येन न यायादिति बोद्धव्यम्। तथा धूमं शवाश्रयं शवोद्भूतं त्यजेत्। मद्येत्यादि। मद्येऽतिसक्तिरतिसेवा तां त्यजेत्। स्त्रीषु योषासु विश्रम्भं विश्वासं स्वातन्त्र्यं च त्यजेत्।

**आचार्यः सर्वचेष्टासु लोक एव हि धीमतः ॥ ४४ ॥**
**अनुकुर्यात्तमेवातो लौकिकेऽर्थे परीक्षकः।**

हि यस्माद्धीमतो बुद्धियुक्तस्य सर्वचेष्टासु निःशेषव्यापारेषु लोक एवाचार्य उपदेष्टाऽतोऽस्माद्धेतोस्तमेव लोकं लौकिकेऽर्थे परीक्षकः पुरुषोऽनुकुर्यात्। यथा लोको व्यवहरति तथा व्यवहियादित्यर्थः।

**आर्द्रसन्तानता त्यागः कायवाक्चेतसां दमः ॥ ४५ ॥**
**स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम्।**



आर्द्रसन्तानता सर्वसत्वेषु कृपालुत्वम् । त्यागो दानम् । कायवाक्चेतसां त्रयाणां दम उपशमः । परार्थेषु परप्रयोजनेषु स्वार्थबुद्धिः । यथा यः परार्थः अयमेव स्वार्थः इत्युभयलोकहितत्वम् इत्येवंप्रकारं सद्व्रतं पर्याप्तम् । समाप्तमित्यर्थः । सत् शोभनं च तद्व्रतं च सद्व्रतम् ।

**नक्तं दिनानि मे यान्ति कथम्भूतस्य सम्प्रति ॥ ४६ ॥**
**दुःखभाङ् न भवत्येवं नित्यं सन्निहितस्मृतिः ।**

नक्तंदिनानि रात्रिदिनानि सम्प्रतीदानीं कथम्भूतस्य कीदृशस्य सतो मे मम यान्ति । एवं नित्यं सन्निहितस्मृतिः सन् पुमान् दुःखभाङ् न भवति ।

**इत्याचारः समासेन यं प्राप्नोति समाचरन् ॥ ४७ ॥**
**आयुरारोग्यमैश्वर्यं यशो लोकांश्च शाश्वतान् ।**

इति समाप्तौ । समासेन संक्षेपेण तावदयमाचारः पूर्वोक्तो यं समाचरन्ननुतिष्ठन्नायुरादीन् प्राप्नोति । तथा लोकान् भूर्भुवः स्वःप्रभृतीन् शाश्वतान्नित्यान् । ननु शाश्वतशब्दो न युक्तः । यतः शश्वच्छब्दस्य कालवाचित्वात् कालाट्ठञिति ठञ् प्राप्नोति । तथा अव्ययानां च सायंप्रातिकाद्यर्थमुपसंख्यानमिति टिलोपश्च प्राप्नोति । नैतदस्ति । नस्तद्धित इत्यत्र सूत्रे ह्युक्तम् । शाश्वत इत्यादौ तु टिलोपो नेष्यते । कालादिति योगविभागाच्चाणिति । तस्माच्छाश्वतशब्दो न्याय्य एवेति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सूत्रस्थाने द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

# तृतीयोऽध्यायः ।

दिनचर्याध्यायादनन्तरमृतुचर्याया उपोद्घातः । पूर्वाऽध्याये सामान्येन दिनचर्योपदिष्टा । ऋतुविशेषवशाच्चाहारविहारसेवनप्रतिपादनार्थमृतुचर्याया आरम्भ इत्याह ।

**अथात ऋतुचर्याध्यायं व्याख्यास्यामः ।**

पूर्ववद्व्याख्येयम्—

**मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षडृतवः स्मृताः ।**
**शिशिरोऽथ वसन्तश्च ग्रीष्मवर्षाशरद्धिमाः ॥ १ ॥**
**शिशिराद्यैस्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।**
**आदानं च तदादत्ते नृणां प्रतिदिनं बलम् ॥ २ ॥**

मासैरित्यादिना कालोपवर्णनमाह । ननु कालोपवर्णनं दिनचर्यायां कस्मान्न कृतम् । उच्यते । ऋतुगौरवोद्भावनार्थम् । ऋतवो हि विशेषणोपयोगिनो विप्रतिपत्तेश्च । यथैके चातुर्मासिकमृतुं कृत्वा शीतोष्णवृष्टिलक्षणान् हेमन्तग्रीष्मवर्षाख्यां-

स्त्रीनृतूनिच्छन्ति । अपरे तु द्विमासिकान् शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्तलक्षणान् षड्तूनिति । द्वे संख्ये येषां ते द्विसंख्यास्तैर्द्विसंख्यैः । माघ आद्यो येषां फाल्गुनादीनां त एवम् । तैर्द्विसंख्यैर्माघाद्यैर्मासैः क्रमात्परिपाट्या षड्तवः स्मृताः । के त इत्याह । शिशिराद्याः शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः । उपचारादेव षट्त्वे लब्धे षड्ग्रहणं परमतक्षेपार्थम् । तथा केचित् त्रय एव ऋतव इति मन्यन्ते । तैस्तु ऋतुभिस्त्रिभिः शिशिरादिभिरुत्तरायणं विद्याज्जानीयात् । अयनमुत्तरं सवितुरुत्तरमार्गप्रतिपत्तिरुत्तरायणम् आदानं तज्जानीयात् । आदानमिति चान्वर्थमिति प्रतिपादयति । तदा तस्मिन् काले नृणां प्रतिदिनमन्वहं बलमादत्ते सारं गृह्णाति । कोऽसौ । प्रकृतत्वादादित्यः ।

कया युक्त्या बलमादत्त इत्याह—

**तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा मार्गस्वभावतः ।**
**आदित्यपवनाः सौम्यान् क्षपयन्ति गुणान् भुवः ॥ ३ ॥**
**तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात् ।**

आदित्यश्च पवनाश्चादित्यपवनास्ते तस्मिन् काले यस्मात्सौम्यान् गुणान् भुवः सम्बन्धिनः क्षपयन्ति विनाशयन्ति । कीदृशास्ते अत्यर्थमतिशयेन तीक्ष्णाश्चोष्णाश्च रूक्षाश्चात्यर्थतीक्ष्णोष्णरूक्षाः । कस्मादेवंविधास्त इत्याह । मार्गस्वभावतो वर्त्मस्वाभाव्यात् । न च स्वभावः पर्यनुयोगमर्हति । मार्ग उष्णांशोरुत्तरदिग्गमनम् । यतश्चादित्यपवना रूक्षास्ततस्तिक्तादयो रसा बलिनो भवन्ति । क्रमादित्यनेन यथासंख्यमत्र बोधयति । तेन तिक्तः शिशिरे वसन्ते कषायो ग्रीष्मे कटुको व्यवतिष्ठते न सर्वे तिक्तादय एकैकस्मिन्नृताविति । तिक्त इत्याद्यसमासकरणं ज्ञापनार्थम् । तिक्तादिरेकैको बली भवति । द्वौ तु स्वप्रमाणावस्थितौ । नैवतौ पृथग्भूय तिक्तादेर्बलवत्त्वमित्यर्थः ।

**तस्मादादानमाग्नेयम्**

यत एवं भूमेः सौम्यगुणहानिर्वर्धनं च रूक्षाणां रसानां तस्मात्कारणादादानमाग्नेयम् ।

**ऋतवो दक्षिणायनम् ॥ ४ ॥**
**वर्षादयो विसर्गश्च यद्बलं विसृजत्ययम् ।**

त्रयो वर्षादय ऋतवो दक्षिणायनं भगवतो दिवाकरस्य दक्षिणदिग्गमनम् । स च कालो विसर्गाख्यः । यद्यस्माद्बलमयं कालो विसृजति ददाति दक्षिणायनाख्यस्तस्माद्विसर्गोऽन्वर्थसंज्ञः कालः ।

**सौम्यत्वादत्र सोमो हि बलवान् हीयते रविः ॥ ५ ॥**
**मेघवृष्ट्यनिलैः शीतैः शान्ततापे महीतले ।**
**स्निग्धाश्चेहाम्ललवणमधुरा बलिनो रसाः ॥ ६ ॥**

हि यस्मादत्र विसर्गाख्ये काले सौम्यत्वात् सोमभूयिष्ठत्वात् सोमो बलवान् ।

तदाश्रितरात्रिवृद्धिदर्शनात्। हीयते रविस्तदाश्रितदिनह्रान्युपलब्धेर्हीनशक्तिः संपद्यते । कदा । महीतले भूपृष्ठे शांततापे सति । कैर्मेघवृष्ट्यनिलैः । शीतैरित्युपलक्षणार्थम् । विसर्गकालत्वान्मृदुभिः स्निग्धैरपीति । अतएव स्निग्धा रसा अम्ललवणमधुरा बलिनो भवन्ति । अत्रापि क्रमादित्यनुवर्तते । पूर्ववच्च व्याख्येयम् ।

**शीतेऽग्र्यं वृष्टिघर्मेऽल्पं बलं मध्यं तु शेषयोः ।**

शीतस्वभावकाले हेमन्तशिशिराख्ये नृणामग्र्यं बलं भवति । वृष्टिश्च घर्मश्च तस्मिन्वृष्टिघर्मे वर्षाग्रीष्माख्ये कालेऽल्पम् । तुरवधारणे । शेषयोः शरद्वसन्तऋत्वोर्मध्यमेव बलम्। ननु वसन्त आदानकालत्वादत्यर्थतीक्ष्णोष्णरूक्षैरादित्यपवनैः शोष्यमाणेषु बलवृद्धिहेतुषु भुवः सौम्येषु गुणेषु कथं मध्यबलत्वमिति ? ब्रूमः । वर्षादिष्वृतुषु बलमुपचितं क्रमेणैवापचीयते । यथा कृष्णपक्षे चन्द्रः । तस्माद्दीर्घकालानुवृत्तं बलं वसन्ते क्रमेणैवापचीयत इति मध्यबलत्वं युक्तम्। अनेनैव हेतुना शिशिरेऽग्र्यबलत्वम् । यतः सकलेन विसर्गेण कालेन यदुपचितमतिशयेन बलं तत् शिशिरे क्रमाच्चात्रादानकालेऽपचीयमानमपि बलं न हीनं लक्ष्यते। यथा कृष्णपक्षादौ चन्द्रः क्षीयमाण इति युक्तमुक्तं शीतेऽग्र्यं बलमिति । वसन्ते च मध्यं बलमित्यवददिह शास्त्रकृत् ।

**बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ॥ ७ ॥**
**भवत्यल्पेन्धनो धातून् स पचेद्वायुनेरितः ।**

किल विसर्गाभिनवबलत्वात्पुमान् बली भवति । तस्य बलिनः पुंसो हेमन्ते काले शीतसंरोधाद्धेतोरनलोऽग्निर्बली भवति । यतः सर्वतः स्रोतोरोधाज्जाठरोऽग्निरान्तरैरेव स्वैरर्चिभिरभिवर्धते । वर्धितश्चासौ भुक्तमाहारं सम्यक्पचति । पक्वाच्चाहाराद्बलमभ्यधिकं जायते । हेमन्ते हेमन्ततौं । द्योतयति अस्मिन्नेव काले शीतसंरोधात् । तथा ह्यन्यर्तुजेन शीतेनाग्निसादो भवति । यथा वर्षासु । तत्र हि वृष्टिवाताभ्यां भवति शीतं न चाग्निदीप्तिः । तथा चाष्टाङ्गसंग्रहे । "वृष्टिवाताकुले त्वन्हि भोजनं क्लेदवातजित् । परिशुष्कं लघु स्निग्धमुष्णाम्ललवणं भजेदिति" । इह पुनरनेकरूपगौरवयुक्तं भोजनं शस्यते । वक्ष्यति हि । अतो हिमेऽस्मिन्नित्यारभ्य यावद्रसान् स्निग्धान्पलं पुष्टमित्यादि । तथोक्तं । "ऊष्मा बहिः प्रतिहतो हिमशीतवातैरन्तः शरीरविवरं प्रतिपद्यमानः । स्वस्थानपिंडितवपुर्भवति प्रचण्डः शीतेऽनिलानलहरो विधिरिष्यतेऽत" इति। तथा यद्यपि तत्र सत्वशरीरेत्यारभ्य यावत् तथोर्जस्करयोगजमित्यादिना ग्रन्थेनाहारो युक्तिजस्यैकस्यैव बलस्य हेतुरित्युक्तो ग्रन्थकृता । तथाऽपि युक्त्या निरूप्यमाणः सहजकालजयोरपि बलयोराहार एव हेतुत्वात्तथा ह्याहारं विना शरीरमेव न स्यात् । तदनया युक्त्या त्रिविधमपि बलमाहारजमपि बोद्धव्यम् । ननु यदि प्रबलोऽनलो भवति ततः किमित्याह । अल्पेन्धन इत्यादि । अल्पमिन्धनमाहाराख्यं यस्य सोऽल्पेन्धनः सन् सोऽनलो धातून्प्रसादी-

न्वचेत्। कीदृशः। वायुनेरितः वातोद्दीपितः।

**अतो हिमेऽस्मिन्सेवेत स्वाद्वम्ललवणान्रसान् ॥ ८ ॥**

अस्मादनन्तरोक्ताद्धेतोरल्पेन्धनत्वे सति धातुपाकः स्यात्। अतोऽस्मिन् हिमे शीते स्वाद्वम्ललवणाख्यान् रसान् सेवेत। नान्यर्तुसंभवे हिम इत्यस्यार्थस्य द्योतनाय हिम इत्युक्तम्।

**दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः।**
**अवश्यकार्यं संभाव्य यथोक्तं शीलयेदनु ॥ ९ ॥**

एतर्हि एतस्मिन्काले बुभुक्षितः प्रातरेव प्रत्युषसि नान्यकाले यत्किंचिद्दिनातिक्रान्तौ सत्यामवश्यं कार्यं मूत्रोत्सर्गादिकं दिनचर्योक्तं च संभाव्य संपाद्य यथोक्तं यथानिर्दिष्टमनु पश्चाद्वातघ्नतैलाभ्यङ्गादिकं शीलयेत्। यद्यपि बुभुक्षितोऽवश्यकार्यं संभाव्य यथोक्तं शीलयेदित्युक्तं तथापि बुभुक्षितेन न तथान्यत्कार्यं यथा भोजनं। तथा चोक्तम्। "आहारकाले संप्राप्ते यो न भुङ्क्ते बुभुक्षितः। तस्य सीदति कायाग्निर्निरिन्धन इवानल" इति। तस्मादौचित्याद्बुभुक्षितेनाहारः कार्य इति वेद्यम्। नन्वन्यस्मिन्नपि काले बुभुक्षितस्यैवाहारानुज्ञानाद्बुभुक्षितग्रहणं न कार्यम्। युक्तमाह भगवान्। किंत्वस्मिन्काले जाठराग्निरत्यग्निच्छायानुकारी भवति। ततोऽस्य जाठराग्नेरिवोपचारो युक्तः। यथा। "मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत्। निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेदिति", अबुभुक्षितस्यैव भोजनाधिकारित्वमिति भ्रान्तिनिरासायेह बुभुक्षितग्रहणम्। निशानां दैर्घ्यादिति विशिष्टकालोपलक्षणार्थं कृतम्। यदात्र हेमन्ते शर्वर्यो दीर्घा जायन्ते तदैष विधिः सर्वोऽनुष्ठेयो न प्रारब्धमात्र एवास्मिन्निति। नन्वत्र सेवेत शीलयद्व्रजेदित्येकार्थाभिधायीनि बहूनि क्रियापदानि किं निर्दिष्टान्येकेनैवार्थाधिगतेः? अत्र ब्रूमः। कार्यान्तरसूचनार्थमेतत्पदत्रयम्। तथाहि। अतो हिमेऽस्मिन्सेवेतेत्यत्र यः सेवेतशब्दः स इदं द्योतयति। स्वाद्वम्ललवणरसाः पवनविजयार्थमस्मिन् काले नितरामुपयोक्तव्याः। न कादाचित्क एषामस्मिन्नृतावुपयोगो विधेय इति। अत एव वातघ्नतैलाभ्यङ्गादेः पृथगेषां रसानामुपन्यासः। यथोक्तं शीलयेदित्यत्र यः शीलयेदित्येष शब्दः स वातघ्नतैलादेः सर्वस्य तुल्यकक्षतां द्योतयति। तथा प्रावाराजिनेत्यादौ यो भजेच्छब्दः स सकलस्याहारविहारशीलनस्य शयनविधेश्च तुल्यतां प्रथयति। तथा च वक्ष्यति। "आहारशयनब्रह्मचर्यैर्युक्त्या प्रयोजितैः। शरीरं धार्यते नित्यमागारमिव धारणैरिति।"

**वातघ्नतैलैरभ्यङ्गं मूर्ध्नि तैलं विमर्दनम्।**
**नियुद्धं कुशलैः सार्धं पादाघातं च युक्तितः ॥ १० ॥**

वातघ्नतैलैरभ्यङ्गं शीलयेत्। तैलस्य सर्वस्यैव वातघ्नत्वाद्वातघ्नेति विशेषणमतिशयप्रतिपादनार्थम्। तेन बलातैलादिभिरिति बोध्यम्। मूर्ध्नि तैलं शिरोऽभ्यङ्गादि। विमर्दनं शरीरसंवाहनमेतदौचित्यादभ्यक्तः सन् शीलयेत्। कुशलैस्तद्विद्भिः

सार्धं नियुद्धं बाहुयुद्धं शीलयेत् । पादाघातं पादेन विमर्दनम् । युक्तित इत्यनेनार्धशक्त्यैव शीलनं द्योतयति । बाहुयुद्धपादाघातयोश्चानभ्यक्तस्यैव शीलनं युक्तम् ।

**कषायापहृतस्नेहस्ततः स्नातो यथाविधि ।**
**कुङ्कुमेन सदर्पेण प्रदिग्धोऽगुरुधूपितः ॥ ११ ॥**

कषायेण रोध्रादिनाऽपहृतोपनीतः स्नेहो यस्य स एवम् । ततोऽनन्तरं यथाविधि शास्त्रोदितेन विधानेन स्नातः । कुंकुमेन काश्मीरेण प्रदिग्धोऽनुलिप्तः । दर्पः कस्तूरिका तेन सह वर्तते यत्कुङ्कुमं तदेवम् । तथाऽगुरुणा जोङ्गकेन धूपितः ।

**रसान् स्निग्धान् पलं पुष्टं गौडमच्छसुरां सुराम् ।**
**गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः शुभाः ॥ १२ ॥**
**नवमन्नं वसां तैलं शौचकार्ये सुखोदकम् ।**
**प्रावाराजिनकौशेयप्रवेणीकौचवास्तृतम् ॥ १३ ॥**
**उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ।**
**युक्त्यार्ककिरणान् स्वेदं पादत्राणं च सर्वदा ॥ १४ ॥**

रसान्मांसरसान् स्निग्धान् भजेत् । मांसरसानां स्निग्धत्वेऽपि स्निग्धानिति विशेषणमतिशयद्योतनार्थम् । पलं मांसं पुष्टं मेदुरं भजेत् । तथा गुडस्येदं गौडं तन्मयम् । तथाऽच्छसुरां सुरामण्डं, सुरां मदिरां च भजेत् । अन्नेन कषायद्रव्यैश्च या क्रियेत सा सुरा भण्यते । ननु द्विधैव सुरा सेव्यत्वेनेहाभीष्टा तत्सुराशब्द एव निर्देष्टुं न्याय्यः । तस्मिन्हि सामान्यपदे निर्दिष्टे द्विधैव सुरा निर्दिष्टा भवति । सत्यमेतत् । किंत्वच्छसुरां नितरां भजेन्न तथा सुरामिति ज्ञापनार्थं द्वयोरुपादानम् । अत एवाच्छसुरामिति पूर्वं निर्दिष्टम् । गोधूमेत्यादि । गोधूमश्च पिष्टं च माषश्च इक्षुश्च क्षीरं च तान्येवम् । गोधूमपिष्टमाषेक्षुक्षीरेभ्य उत्थानं यासां विकृतीनां ता एवम् । उत्पूर्वात्तिष्ठतेः सुपीति योगविभागाद्भावे कः । उदः स्थास्तंभोः पूर्वस्येति सस्य तकारः । गोधूमपिष्टमाषेक्षुक्षीरोत्थाश्च ता विकृतयश्च ताः शुभा रम्या भजेत् । तथा नवमपुराणमन्नं तथा वसां भजेत् । "शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता" । तथा तैलं भजेद्भक्षयेत् । अभ्यंगस्तु प्रागनुज्ञात एव । शौचकार्ये शौचक्रियायां सुखोदकमुष्णोदकं भजेत् । प्रावारः कार्पासो रोमवान् घनः पटस्तूलपटकादिः । अजिनं सुखस्पर्शरोमचर्म । कौशेयं पट्टवसनम् । प्रवेणी सूचीवाणाख्यो वस्तुविशेषः । कौचवं रांकववस्त्रभेदः । तवरक इत्यन्ये । एतैरास्तृतं दत्तप्रतिच्छदपटं शयनं भजेत् , कीदृक् शयनं भजेत् , उष्णस्वभावै रोमाशिकारल्लिकाप्रायैः प्रावृतः प्रकर्षेणाच्छादितः । तथा अर्ककिरणान्भजेत् । कथम् । युक्त्या सम्यग्योगलक्षणया । अतिसेविता हि ग्लान्यादीन्कुर्युः । तथा स्वेदं भजेत् । युक्त्यैवेत्यत्रापि योज्यम् । अतिसेवितो हि स्वेदो ग्लान्यादीन् जनयेत् । पादत्राणं च पादुकादिकं सर्वदा भजेत् ।

**पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः ।**
**हरन्ति शीतमुष्णाङ्ग्यो धूपकुङ्कुमयौवनैः ॥ १५ ॥**

ऊरू च स्तनौ च श्रोणिश्च ऊरुस्तनश्रोणि । पीवरं पीनमूरुस्तनश्रोणि । यासां ता एवम्भूताः प्रमदा विलासिन्यः शीतं हरन्ति नुदन्ति ।पीनत्वेनातिकार्श्यमत्र निषिध्यते । तथा चाह । ग्राम्यधर्माधिकारे त्यजेदतिकृशामिति । किंभूताः । सह मदेन यौवनोद्भूतेन सुरादिपानजेन कामोद्रेककारिणा वा वर्तन्ते समदाः । तथा प्रिया वल्लभाः शीतं हरन्ति । किम्भूता उष्णाङ्ग्यो धूपकुङ्कुमयौवनैरगुर्वादिधूपेनोष्णाङ्ग्यः । तथा कुङ्कुमानुलेपनेनोष्णाङ्ग्यः । तथा यौवनोष्मणा सहजेनोष्णाङ्ग्य इति योज्यम् ।

**अङ्गारतापसन्तप्तगर्भभूवेश्मचारिणः ।**
**शीतपारुष्यजनितो न दोषो जातु जायते ॥ १६ ॥**

अङ्गाराणां तापोऽङ्गारतापस्तेन संतप्तं च तद्गर्भेऽभ्यन्तरे भूवेश्म च तत्तस्मिंश्चरति नित्यं यस्तस्याङ्गारतापसंतप्तगर्भभूवेश्मचारिणः पुंसो यतः शीतपारुष्यजनितो दोषो दुःखं न जातु कदाचिज्जायते ततोऽङ्गारतापसंतप्तगर्भभूवेश्मचारी स्यादिति भावः ।

**अयमेव विधिः कार्यः शिशिरेऽपि विशेषतः ।**
**तदा हि शीतमधिकं रौक्ष्यं चादानकालजम् ॥ १७ ॥**

अयमेव हैमन्तो विधिः पूर्वोक्तः शिशिरे च विशेषतोऽतिशयेन कार्यः । कुत इत्याह । यस्मात्तस्मिन् काले शीतमधिकं भवति । कालस्वाभाव्यात् । तथा आदानकालाज्जातमादानकालजं च रौक्ष्यं भवति । ततो हेतुद्वयाद्विशेषेण हैमन्तिको विधिः सेव्यः । हेमन्ते रसान् स्निग्धान् शीलयेदित्युक्तम् । शिशिरेताननतिशयेन शीलयेत् । एवं सर्वेष्वपि हैमन्तिको विधिर्योजनीयः । आदानकालजमित्यनेनैतद्द्योतयति । आदानकाल एव रौक्ष्यस्य कारणं नान्यत् । अत एव हेमन्ते शीतेऽपि रौक्ष्यं नास्त्येवेति । आदानस्य च प्रारम्भमात्रत्वम् । एवं शिशिरस्य सम्भव इति शिशिरे किंचिदेव रौक्ष्यं वेद्यम् । ननु यथा रौक्ष्यमादानकालजं तथौष्ण्यमपि । तथा चोक्तम् । तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा इति । एवं चौष्ण्यसद्भावाच्छीतस्य हेमन्ततो हानिः प्राप्ता न त्वाधिक्यम् । कथं तदा हि शीतमधिकमिति । ब्रूमः । रौक्ष्यस्य द्वौ हेतू । एकस्तावद्भगवद्दिवाकरकरैर्जगतः स्नेहादानम् । द्वितीयस्त्वग्नेः कालः । तदेवं रौक्ष्येणोभयहेतुजेन शिशिरकाले वाताः शीतस्वभावा आहिताधिकशक्तयो जायन्ते हैमन्तेभ्यो मारुतेभ्यः । तथाविधाश्चोष्णेनादानकालप्राधान्यादप्राप्तबलेन शिशिरे नाभिभूयन्ते । अनभिभूताश्च शीतस्वभावत्वाच्च शीतमेव वर्धयन्ति । अतो युक्तं शीताधिक्यं शिशिर इति ।

सम्प्रति वसन्तचर्यां विवक्षुरिदमाह ।

**कफश्चितो हि शिशिरे वसंतेऽर्कांशुतापितः ।**
**हत्वाऽग्निं कुरुते रोगानतस्तं त्वरया जयेत् ॥ १८ ॥**

यस्मात् शिशिरे मधुरस्निग्धादिनाऽऽहारेण कालस्वाभाव्याच्च श्लेष्मा संचितोऽतिशयेन स्त्यानत्वादतिकुपितो वसन्ते ऋतावर्कांशुतापितः सूर्यप्रभाभिर्विलायितो द्रवस्वरूपत्वाज्जलमिव विपरीतं जाठराग्निं हत्वा हि यस्माद्रोगान्विकारान् कुरुते जनयति । अतोऽस्मात्कारणात्तं कफं त्वरया शीघ्रमेव जयेत् । दोषानिति केचित्पठन्ति । अर्कतापित इत्यनेनैव सिद्धे अंशुशब्दोऽत्र रश्मीनां पटिमानं सूचयति न तथा शीते । तत्र हि धूमधूम्ररजोमन्दा इत्यधिरोगकैर्वर्जयेत् ।

**तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः ।**
**व्यायामोद्वर्तनाघातैर्जित्वा श्लेष्माणमुल्बणम् ॥ १९ ॥**
**स्नातोऽनुलिप्तः कर्पूरचन्दनागुरुकुङ्कुमैः ।**
**पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक् ॥ २० ॥**
**सहकाररसोन्मिश्रानास्वाद्य प्रिययार्पितान् ।**
**प्रियास्यसङ्गसुरभीन् प्रियानेत्रोत्पलाङ्कितान् ॥ २१ ॥**
**सौमनस्यकृतो हृद्यान्वयस्यैः सहितः पिबेत् ।**
**निर्गदानासवारिष्टसीधुमार्द्वीकमाधवान् ॥ २२ ॥**

तीक्ष्णैर्वमननस्यविरेकादिभिरुपक्रमेत् । तथा लघूनि रूक्षाणि च यानि भोजनानि तैश्च । तथा व्यायामश्चोद्वर्तनं च आघातश्च तैश्च कफं जयेदिति । चशब्दो लुप्तनिर्दिष्टः । ततः कफमुल्बणमुद्धतं जित्वाऽनन्तरं स्नातोऽनुलिप्तः समालब्धः कर्पूरचन्दनागुरुकुंकुमैस्तथा पुराणं च तद्यवगोधूमं च तथा क्षौद्रं माक्षिकं तथा जाङ्गलं च तत् शूल्यं भटित्रं च तत्तानि भुंक्ते पुराणयवगोधूमक्षौद्रजांगलशूल्यभुक् । शूल्य इति शूलात्पाक इति यः । एवंविधः सन् वयस्यैर्मित्रैः सहित आसवादीन् पिबेत् । किंभूतान् । निर्गदान् निर्दोषान् । पिबेदिति वक्ष्यमाणेन सम्बन्धोऽत्र दीपकत्वात् । आसवो यो द्रव्याण्यासुत्य क्रियते । उक्तं च । "मद्याकाराधिकद्रव्यमदिराद्यैः कृतस्तु यः । सोऽरिष्टः स्यादासवस्तु द्रव्याण्यासुत्य यः कृतः" इति । सीधुरिक्षुरसोद्भवः । मार्द्वीकं मृद्वीकारसोद्भवम् । माधवो मधुना संस्कृतः । किंभूतानासवादीन् । सहकाररसोन्मिश्रान् प्रियया आस्वाद्य किंचित्पीत्वाऽर्पितान् ढौकितान् । तथा प्रियास्यसङ्गेन सुरभीन् सुंगधीन् । तथा प्रियानेत्राण्येवोत्पलानि तैरङ्कितान् संजातशोभान् । तथा सौगनस्यकृतश्चित्तप्रसादकृतः । तथा हृद्यान् हृदयाय हितान् ।

**शृङ्गबेराम्बु साराम्बु मध्वम्बु जलदाम्बु वा ।**

तथा शृङ्गबेराम्बु शुण्ठीकथितजलं पिबेत् । तथा सार असनचन्दनादिजस्तेन

क्वथितमम्बु पिबेत् । तथा मधुना युक्तमम्बु मध्वम्बु । जलदेन मुस्तया च क्वथितमम्बु पिबेत् । वेति समुच्चये ।

**दक्षिणानिलशीतेषु परितो जलवाहिषु ॥ २३ ॥**
**अदृष्टनष्टसूर्येषु मणिकुट्टिमकान्तिषु ।**
**परपुष्टविघुष्टेषु कामकर्मान्तभूमिषु ॥ २४ ॥**
**विचित्रपुष्पवृक्षेषु काननेषु सुगन्धिषु ।**
**गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी ॥ २५ ॥**

काननेषूपवनेषु स्थितो मध्याह्नं गमयेदतिवाहयेत् । अह्नो मध्यो मध्याह्नः । संख्याविसायेत्यादिज्ञापकात्पूर्वापरत्यादिना एकदेशिसमासः । अह्नोऽह्न एतेभ्य इत्यह्नादेशः । कथंम् । गोष्ठ्यां क्रीडायां कथा गोष्ठीकथास्ताभिश्चित्राभिः कमनीयाभिर्व्यवहारसम्बन्धिनीभिरित्यर्थः । कीदृशः सन् । सुखी रागद्वेषादिरहितः । किंभूतेषु काननेषु । दक्षिणदिक्प्रवृत्तैरनिलैः शीतानि तेषु दक्षिणानिलशीतेषु । तथा परितः समन्ताज्जलं नित्यं वहन्ति यानि तेषु । आभीक्ष्ण्ये णिनिः । तथा क्वचित्प्रदेशेऽदृष्ट ईषद्दृष्टः क्वचिदतिघनत्वान्नष्टो न दृश्यते सूर्यो येषूपवनेषु तान्येवं तेषु । तथा मणीनां वज्रमरकतादीनां कुट्टिमानि विशिष्टा भुवस्ताभिः कान्तिः शोभा येषां तान्येवं तेषु । तथा परपुष्टैः कोकिलैर्विघुष्टेषु कृतशब्देषु तथा कामस्य कर्मान्ताः कामकर्मान्ता मदनव्यापाराः । अन्तशब्दोऽत्र प्रशंसावचने । यथोद्भटस्य वचनम् । वनान्तदेवतावेण्य इति । कामकर्मांतनिमित्तं भूमयो येषां वनानां तान्येवं तेषु । विचित्राणि नानारूपाणि पुष्पाणि येषां ते तथाविधा वृक्षा येषां तान्येवं तेषु । सुष्ठु गंधो येषां तेषु । गंधस्येदितीत्समासान्तः । अस्मिन्काले कफोपचयदोषभयात् ।

**गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् ।**

गुरुशीतादींस्त्यजेत् । ननु लवणमपि श्लेष्माणं करोति तत्कस्मादिह न निषिद्धम् । अतो ब्रूमः । लवणः पूर्वं कफमम्लमधुराविव न करोति किंतर्हि निधने चिरन्तनसंचितं घृतिरूपं श्लेष्माणं विधत्ते विष्यन्दित्वात् । न च लवणस्य मधुरादेरिव बहुतरस्य प्रयोगः प्रसिद्धः किंतर्ह्यल्पस्यैव । तस्माल्लवणस्यात्रानिषेध एव न्याय्यः ।

अधुना ग्रीष्मचर्यामुपदिदिक्षुराह ।

**तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ॥ २६ ॥**
**प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्धते ।**

यद्यस्मात्तीक्ष्णांशुर्भास्करोऽतितीक्ष्णा अंशवः करा यस्य स एवंभूतः सन् ग्रीष्मे संक्षिपतीव जगत्स्नेहमित्यत्रानुक्तमप्यर्थाल्लभ्यते । केचित्तु स्नेहमर्कोऽतितीक्ष्णांशुरिति पठन्ति । स्नेहस्तेजो बलं सारमित्येकोऽर्थः । तं स्नेहमर्कः संक्षिपतीव यत्सम्बन्धः संहरतीव पिबतीव । इवशब्देनैतत्सूचयति । हेतुप्रत्ययपरतन्त्रेषु सर्वभावेषु न कश्चित्कंचित्तद्बुद्धिपूर्वकं संहरति । परमार्थतो बलहानिकृत्त्वादेषाम् ।

**अतोऽस्मिन् पटुकट्वम्लव्यायामार्ककरांस्त्यजेत्॥ २७॥**

अतोऽस्मात्कारणादस्मिन् ग्रीष्मकाले पट्वादींस्त्यजेत्।

किमत्र सेव्यमित्याह—

**भजेन्मधुरमेवान्नं लघु स्निग्धं हिमं द्रवम्।**

मधुरमेवान्नं भजेत्। बाहुल्येन मधुरमन्नं सेव्यं न तथाऽन्यरसजातमित्येवकाराल्लभ्यते। तथा लघु स्निग्धं हिमं द्रवं चेति चशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः।

सामान्येन भोजनमुक्त्वा विशेषणाह—

**सुशीततोयसिक्ताङ्गो लिह्यात्सक्तून् सशर्करान्॥ २८॥**

सक्तून् सशर्करान् लिह्यात्। सुष्ठु शीतं सुशीतं च तत्तोयं च तेन सिक्तमाप्लुतमङ्गं कायो यस्य स एवम्भूतः सन्।

**मद्यं न पेयं पेयं वा स्वल्पं सुबहुवारि वा।**

अस्मिन्काले मद्यं न पेयम्। पेयं वा स्वल्पमिति। वातश्लेष्मप्रकृतिना वातक्षयार्थमन्यर्तुवद्बहु न पेयं किन्तर्हि स्वल्पमेव पातव्यम्। सुबहुवारि वेति पित्तश्लेष्मप्रकृतिना मद्योचितेन श्लेष्मप्रतिक्रियार्थं पित्तप्रतीकारमपीच्छता सुबहुवारि तन्मद्यं पेयमित्यत्रानुक्तोप्येवमर्थाद्विषयविभागो बोध्यः। अन्यथा निषेधविध्योर्विरोधः स्यात्।

उक्तविध्यतिक्रमे दोषमाह—

**अन्यथा शोफशैथिल्यदाहमोहान् करोति तत्॥ २९॥**

तन्मद्यमन्येन प्रकारेण पीतं सत् शोफादीन् करोति। शोफः श्वयथुः। शैथिल्यमङ्गानामनैष्ठुर्यम्। दाहः सर्वाङ्गीणस्तापः। मोहोऽज्ञानं जन्तोः।

**कुन्देन्दुधवलं शालिमश्नीयाज्जाङ्गलैः पलैः।**

कुन्दः पुष्पविशेषः। इन्दुश्चन्द्रः। तयोर्द्वन्द्वः। कुन्देन्दुवद्धवलं शुक्लं शालिं जाङ्गलैः पलैर्मांसैः सहाश्नीयादद्यात्। "क्षुण्णस्मितः स्मृतः शाली रक्तो व्रीहिरुदाहृतः"।

**पिबेद्रसं नातिघनं रसालां रागखाण्डवौ॥ ३०॥**
**पानकं पञ्चसारं वा नवमृद्भाजनस्थितम्।**
**मोचचोचदलैर्युक्तं साम्लं मृन्मयशुक्तिभिः॥ ३१॥**

रसं नातिघनं पिबेत्। रसशब्देनादिलोपाख्यया तन्त्रयुक्त्या मांसरस उच्यते। तथा रसालां मार्जिकाख्यां पिबेत्। तथा रागखाण्डवौ पानकं च पंचसाराख्यम्। एतेषां च लक्षणं तन्त्रान्तर उक्तम्। यथा—"सितामध्वादिमधुरा रागास्तत्राच्छकान्तयः। ते साम्लाः खाण्डवा लेह्याः पेयाश्चांशुकगालिताः। स्वाद्वम्लपटुकट्वाद्याः प्रलेह्यास्तत्र खाण्डवाः। गुडदाडिममांसाद्या रागाश्चांशुकगालिताः। हृद्या वृष्या रुचिकरा ग्राहिणो रागखाण्डवा" इति। तथा। "द्राक्षामधूकखर्जूरकाश्मर्यः सपरूषकाः। तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम्। पानकं पञ्चसाराख्यं

रूक्षोष्णो वंशजो यवः ॥ १३ ॥

वंशोद्भवो वेणुयवो रूक्षोष्णो भवति ।

**वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा ।**
**सन्धानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ॥ १४ ॥**

गोधूमो वृष्यादिगुणयुक्तः । जीवन ओजोऽभिवर्धनः । तथा वातपित्तहरः सन्धानकारी ऊरुप्रभृतेर्भग्नस्य सन्धानं करोति । तथा स्थैर्यकृत्सरश्च । चरके त्वन्यथैव गुणयुक्त उक्तः । यथा—"स्थैर्यकृत्सकषायश्च बल्यः श्लेष्मविकारहा । सन्धानकृद्वातहरो गोधूमः स्वादुशीतल" इति ।

**पथ्या नन्दीमुखी शीता कषायमधुरा लघुः ।**

नन्दीमुखी[1] पथ्या शरीराय हिता कषायमधुरा लघुश्च । इति शूकधान्यवर्गः ।

शिम्बीधान्यवर्गः—

**मुद्गाढकीमसूरादि शिम्बीधान्यं विबन्धकृत् ॥ १५ ॥**
**कषायं स्वादु सङ्ग्राहि कटुपाकं हिमं लघु ।**
**मेदःश्लेष्मास्रपित्तेषु हितं लेपोपसेकयोः ॥ १६ ॥**

अस्मादनन्तरं शिंबीधान्यवर्गस्य सम्बन्धप्रयोजनं प्रागुक्तमेव ।

शिंब्याः कोश्या धान्यं मुद्गादिकं यत्, शिम्बीधान्यं तद्विबन्धकृत् । केषां विबन्धं करोति । सामर्थ्यात् स्रोतसां नतु पुरीषादीनाम् । तथा च सङ्ग्राहीत्यत्रैव पठति शास्त्रकृत् । सङ्ग्राहिलक्षणं च तन्त्रान्तरे । यथा—"भेदि तत्पिण्डितान् भावान् शकृदाद्यान्भिनत्ति यत् । विपरीतमतो ग्राहीति" । तस्माद्विबन्धं स्रोतसामेवेत्याह । तथा कषायं स्वादु कटुपाकं शीतवीर्यं लघु च । मसूरादीत्यत्राऽऽदिशब्देन मकुष्ठचणकादीनां ग्रहणम् । तथा मेदआदिषु हितं प्रकृतत्वादभ्यवहारे तथा लेपोपसेके चेति । चशब्दोऽत्र लुप्त-निर्दिष्टो बोध्यः । लेपः प्रदेहः । उपसेकः परिषेकः । कषायशीतरूक्षत्वेन कटुपाकित्वेन च वातकृत्त्वं शिम्बीधान्यस्य शास्त्रकृतोक्तम् । अत एवेदमुपपन्नम् । मुद्गोऽल्पचल इति । यदि हि शिम्बीधान्यस्य मारुतकृत्त्वं समेयात् तदैतद्वक्तुं युज्यते । तस्माद्वातकृत्त्वमस्यास्तीति स्थितम् । तस्मिंश्च सत्याध्मानकारित्वमप्युपपन्नमेव । अत एव सङ्ग्रहेऽस्याध्मानकारित्वमुक्तम् । मुद्गादीनां च विशेषास्तत्रैवोक्ताः । यथा—" हरितास्तेष्वपि वरा मकुष्ठाः क्रमिकारिणः । वर्ण्याः परं प्रलेपाद्यैर्मसूरा ग्राहिणो भृशमिति " ।

**वरोऽत्र मुद्गोऽल्पचलः, कलायस्त्वतिवातलः ।**
**राजमाषोऽनिलकरो रूक्षो बहुशकृद् गुरुः ॥ १७ ॥**

अत्र एषु च शिम्बीधान्येषु मध्ये मुद्ग उत्तमः । तथा अल्पं चलं पवनं करोतीत्यल्पचलः । तुर्व्यतिरेके । कलायः पुनरतिशयेन वातलो भवति । राजमाषो रूक्षो बहुशकृत्करोतीति बहुशकृत् । तथा गुरुस्तथाऽनिलकरः । ताच्छील्ये टः ।

मौ.टि. १–नान्दीमुखीयविकेति चक्रपाणिः। दीर्घसूक्ष्मो गोधूमो नन्दीमुखीति कोषान्तरे।

अन्यशिम्बीधान्याच्चातिवातलोऽयमिति वेद्यमनिलकरग्रहणात्। अन्यथा शिम्बी-धान्यसामान्यलक्षणेन वातमात्रकरणस्य लब्धत्वादनिलकरग्रहणं न कुर्यात्।

**उष्णाःकुलत्थाःपाकेऽम्लाःशुक्राश्मश्वासपीनसान्।**
**कासार्शःकफवातांश्च घ्नन्ति पित्तास्रदाः परम्॥ १८॥**

कुलत्था उष्णवीर्याः पाकेऽम्लाः। तथा शुक्रादीन् घ्नन्ति। अश्माऽश्मरी वक्ष्यमाणलक्षणा। तथा पित्तास्रदाः परमतिशयेन रक्तपित्तकराः कषायस्वादुसङ्ग्राहित्वं शिम्बीधान्यसामान्यलक्षणेनैषां वेद्यम्। दृष्टिनाशनत्वं चोष्णवीर्यत्वेन रक्तपित्तकर-त्वेन च। सङ्ग्रहे तु स्पष्टं कृत्वोक्तम्—"कषायस्वादुरूक्षोष्णाः कुलत्था रक्तपित्तलाः। पीनसश्वासकासार्शोहिक्काऽऽनाहकफानिलान्। घ्नन्ति शुक्राश्मरीं शुक्रं दृष्टिं शोफं तथोदरम्। ग्राहिणो लघवस्तीक्ष्णा विपाकेऽम्ला विदाहिन" इति।

**निष्पावो वातपित्तास्रस्तन्यमूत्रकरो गुरुः।**
**सरो विदाही दृक्शुक्रकफशोफविषापहः॥ १९॥**

निष्पावो राजशिम्बीसंज्ञो वातादिकरस्तथा गुरुः सरो विदाही च। तथा दृगादींश्च हन्ति। सङ्ग्रहोक्तं चाम्लपाकत्वं कषायमधुरत्वं चेह नोक्तम्। यतोऽम्ल-विपाकित्वं विदाहित्वादेवास्योक्तम्। कषायस्वादुत्वं च शिम्बीधान्यसामान्यगुण-कथनेनैव। कृष्णात्रेयस्त्वाह—"निष्पावा मधुरा रूक्षाः सकषाया विदाहिनः। उदा-वर्ते प्रशस्यन्ते गुरवो वातपित्तला" इति।

**माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः।**
**गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत्॥ २०॥**

माषः स्निग्धो बलादिकरः। तथा सरो गुरुरुष्णश्च। तथा वातहा स्वादुश्च। तथा शुक्रस्य वृद्धिं, शुक्रस्यैव विरेकं=बहिःप्रेरणं करोति।

**फलानि माषवद्विद्यात्काकाण्डोलात्मगुप्तयोः।**

काकाण्डोला चात्मगुप्ता च तयोः फलानि माषवद्विद्यान्माषसमगुणानि विजा-नीयात्। काकाण्डोला कटभी ( काङ्गोणी ) आत्मगुप्ता कपिकच्छुः।

**उष्णस्त्वच्यो हिमः स्पर्शे केश्यो बल्यस्तिलो गुरुः॥ २१॥**
**अल्पमूत्रः कटुः पाके मेधाऽग्निकफपित्तकृत्।**

तिल उष्णवीर्यः। तथा त्वच्यः। तथा स्पर्शे शीतः। केश्यो बल्यो गुरुश्च। तथाऽल्पमूत्रोऽल्पमूत्रकरः। पाके कटुः। तथा मेधादीन् करोति। त्वच्यकेश्यबल्याः= हितार्थे यत्प्रत्ययान्ताः। स्निग्धत्वमनिलघ्नत्वं कषायकटुतिक्तरसत्वं नानाजातित्वं चेहास्य ग्रन्थकृता लाघवान्नोक्तम्। सङ्ग्रहे तूक्तमेव। यथा—"स्निग्धोष्णतिक्त-कटुकः कषायमधुरस्तिलः। त्वच्यः केश्यो गुरुर्वृष्यः स्पर्शशीतोऽनिलापहः। अल्प-मूत्रः कटुः पाके मेधाऽग्निकफपित्तकृत्। कृष्णः प्रशस्तस्तमनु शुक्लस्तमनु चारुणः—" इति। अन्ये त्वनया युक्त्या सङ्ग्रहोक्तमर्थं संगृह्णते। स्निग्धत्वं तावत्तिलस्य तैलेषु

मुख्यस्य स्नेहस्य योनिभूतत्वात्सिद्धम् । कफपित्तकृदिति वचनाच्च सामर्थ्यलब्धं वातघ्नत्वम् । कषायस्वाद्विति–शिम्बीधान्यसामान्यगुणकथनेन कषायस्वादुत्वं लब्धमिति । एतदेवोररीकृत्य सद्योव्रणप्रतिषेधे वक्ष्यति–"कल्कं संरोहणं कुर्यात्तिलानां मधुकान्वितम् । स्निग्धोष्णतिक्तमधुरकषायत्वैः स सर्वजिदिति" ।

**स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः ॥ २२ ॥**
**दृक्शुक्रहृत्कटुः पाके,**

उमाऽतसी स्निग्धा स्वाद्वादिगुणयुक्तोष्णवीर्या च । तथा दृष्टिं शुक्रं च हरति कटुपाका च ।

**तद्वद्बीजं कुसुम्भजम् ।**

तयोमया तुल्यं वर्तते तद्वदुमासमानगुणं कुसुम्भबीजमित्यर्थः ।

**माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च ॥ २३ ॥**

अत्र शिम्बीधान्येषु माषोऽश्रेष्ठः । शूकजेषु शूकधान्येषु यवकोऽश्रेष्ठः ।

**नवं धान्यमभिष्यन्दि, लघु संवत्सरोषितम्,**
**शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम् ॥ २४ ॥**

नवं प्रत्यग्रं धान्यमभिष्यन्द्याभिमुख्येन स्यन्दयति—ताच्छील्ये णिनिः । मालिन्यात्स्रोतसां स्रुतिरूपश्लेष्माणं करोतीत्यर्थः । अर्थात्पुराणमनभिष्यन्दि । संवत्सरोषितं वर्षातीतं लघु भवति । नवं चार्थाद् गुर्वित्यनुक्तमप्युक्तं भवति । तन्त्रान्तरेऽप्युक्तम्—"वर्षातीतं सर्वमन्नं परित्यजति गौरवम् । नतु त्यजति तद्वीर्यं वीर्यं मुञ्चत्यतः क्रमादिति" । शीघ्रेत्यादि । लघ्वित्यनुवर्तते । सूप्यं मुद्गादि यच्छीघ्रजन्म तल्लघु भवति । तथा विगततुषं युक्त्या भर्जितं भृशं लघु भवति । सङ्ग्रहे त्वेवमुक्तम्—"नवं धान्यमभिष्यन्दि सेक्यं केदारजं च यत् । लघु वर्षोषितं दग्धभूमिजं स्थलसम्भवमिति" इति शिम्बीधान्यवर्गः ।

अथ कृतान्नवर्गः—

निर्दिष्टे शूकशिम्बीधान्ये तयोश्च संस्कृतयोरुपयोग इति कृतान्नवर्गश्चारभ्यते ।

**मण्डपेयाविलेपीनामोदनस्य च लाघवम् ।**
**यथापूर्वं शिवस्तत्र मण्डो वातानुलोमनः ॥ २५ ॥**
**तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत् ।**
**स्रोतोमार्दवकृत्स्वेदी सन्धुक्षयति चानलम् ॥ २६ ॥**

मण्डादीनां यथापूर्वं लाघवम् । तेनौदनमपेक्ष्य लघ्वी विलेपी, ततोऽपि पेया, पेयातो मण्डो लघुतर इत्यर्थोऽवतिष्ठते । मण्डपेयाविलेप्योदनानां यथापूर्वं लाघवमित्येवं वक्तव्ये यदत्रौदनस्य पृथक्पाठः स इदं ज्ञापयति । मण्डादयो लाजोपादाना वेद्या न तु तण्डुलोपादानाः । तथा च मुनिः–"शृतः पिप्पलिशुण्ठीभ्यां युक्तो लाजाम्बुदाडिमैः । मण्डः सन्दीपयत्यग्निं वातं चाप्यनुलोमयेदिति" । तदुक्तम्—"द्रव्यस्यार्धपलं दत्त्वा तोयस्य प्रस्थमावपेत् । अर्धशेषं गृहीत्वा तत्कर्षौ द्वौ दाडिमस्य च । युक्तं सैन्धवविश्वाह्वधान्यकैः शाणमात्रकैः । द्विकर्षमात्रैर्लाजैश्च भूयः संक्वथितं

च तत् । पिप्पलीजीरकाभ्यां च शार्ङ्गैकेनावचूर्णितम् ।' पेयास्वेष विधिः कल्प्यो दाडिमादिकृतास्वपीति" । तथा--"सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता । घनसिक्था विलेपी स्याद्यवागूर्विरलद्रवेति"। अन्ये तु मण्डलक्षणं पेयालक्षणं चान्यथैवेच्छन्ति । तथा तल्लक्षणम्--"लाजाम्बुसैन्धवकणाधान्यनागरदाडिमैः । युक्तो विमृदितः पूतो मण्डः संस्कृत उच्यते। निर्द्रव्या प्राकृता पेया तक्रदाडिमतण्डुलैरिति"। सामान्यपेयायाश्च तक्रदाडिमलाजादिसाधिताया गुणनिर्देशोऽयं न तु विशिष्टाया ज्वरचिकित्सादिविहिताया इति द्रष्टव्यम् । विशेषग्रहणात्कर्मान्तरनिर्देशाच्च । तत्र तेषु मण्डादिषु मध्ये मण्डः शिवः । तथा वातानुलोमनः । तथा तृड्ग्लानिदोषशेषं हन्तीति तृड्ग्लानिदोषशेषघ्नः । अमनुष्यकर्तृके चेत्यत्र ठक् । विहितवमनस्य विहितविरेचनस्य वा किञ्चिच्छेषो यो दोषस्तस्य भावो दोषशेषता वचनज्ञापकात् कृतवमनविरेचनस्य दोषशेषकरणं तेन च वमनकर्मणि विरेचनकर्मणि वा कर्तव्येऽतियोगभयात्तद्दोषशेषः कार्य इत्ययमर्थो युक्त्या प्रतिपादितः । तथा मण्डः पाचनो धातुसाम्यकरश्च । तथा स्रोतसां मार्दवं करोति । तथा स्वेदयतीति स्वेदी । वह्निं च दीपयति ।

**क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ।**
**मलाऽनुलोमनी पथ्या पेया दीपनपाचनी ॥ २७ ॥**

क्षुच्च तृष्णा च ताभ्यां ग्लानिः सा च दौर्बल्यं च कुक्षिरोगश्च ज्वरश्च तानपहन्ति या सैवम्भूता पेया । दौर्बल्यं कार्श्यम् । तथा मलान्वातादीननुलोमयति स्वमार्गस्थान् करोति । पथ्या शरीरस्य हिता । तथा दीपनी पाचनी चेति । पुंवत्कर्मधारयेति पुंवाद्भावः ।

**विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ।**
**व्रणाऽक्षिरोगसंशुद्धदुर्बलस्नेहपायिनम् ॥ २८ ॥**

विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता च । व्रणश्चाक्षिरोगश्च संशुद्धश्च दुर्बलश्च स्नेहपायी च तेषां हिता । व्रणाक्षिरोगशब्दौ मत्वर्थीयाकारान्तौ ।

**सुधौतः प्रस्रुतः स्विन्नोऽत्यक्तोष्मा चौदनो लघुः ।**
**यश्चाग्नेयौषधक्वाथसाधितो भृष्टतण्डुलः ॥ २९ ॥**
**विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः ।**

ओदनः सुष्ठु धौतस्तथा प्रस्रुतो निश्चोतितः स्विन्नोऽत्यक्तबाष्पश्च लघुर्भवति । यश्चौदन आग्नेयौषधानां चित्रकादीनां क्वाथेन साधितः सोऽतिलघुः । तथा भृष्टास्तण्डुला यस्मिन्नोदने सोऽतिलघुतमः । यथोक्तलक्षणादोदनाद्विपरीतो योऽसुधौतादिः स गुरुः । क्षीरमांसादिभिर्मधुरैर्यश्च साधितः सोऽतिगुरुः ।

**इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ॥ ३० ॥**

इत्यनया दिशा सर्वं पेयादिकं पूर्वोक्तं वक्ष्यमाणं च भक्ष्यादिकं द्रव्येण क्रियया

संयोगेन मानेन चादिशेत् । तत्र द्रव्यतो यथा । ओदनस्य रक्तशाल्यादिजस्य लाघवम् । यावकादिजस्य तु गौरवम् । क्रियातो यथा । पाकादिसंस्काराच्छूल्यमांसस्य लघ्वादिगुणयोगः । अपरस्य त्वन्यथात्वं दृश्यते । तथा चोक्तं तन्त्रान्तरे—"वृष्यं वातहरं बल्यं पथ्यं शूल्यामिषं लघु । अपथ्यं गुरु विष्टम्भि मांसं यच्च रसोद्धृतमिति" । तन्त्रान्तरे चोक्तम्—"खिन्नं मांसं गुरु स्तम्भि शूलपक्वं त्रिदोषजिदिति" । क्रिया संस्कार इत्यर्थः । योगः संयोगस्तेन । यथा—आग्नेयचित्रकाद्यौषधक्वाथैः साधितस्य लाघवम् । मानतो यथा—बहुभिर्लघुभिरत्यल्पैश्च गुरुभिर्युक्तैर्लघुरेव । विपरीतैस्तु विपरीत एव । आदिग्रहणेन देशादिपरिग्रहः । जाङ्गलदेशप्रभवतण्डुलकृतो लघुः । आनूपदेशतण्डुलकृतो गुरुरित्यादि बोध्यम् ।

**बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रसः ।**

रस इति मांसरसः, आदिशब्दलोपात् । स बृंहणादिगुणयुक्तः । कृताकृतस्य च रसस्यायं गुणनिर्देशो बोध्यः । रसो हि स्नेहशुण्ठ्यादियुतः कृत इत्युच्यते, विपरीतस्त्वकृतः । तेन कृतस्य तन्त्रान्तरे विधानमप्युक्तम्, गुणाश्च । यथा—"छागलं सक्थिजं मांसं निरस्थि तैत्तिरं तथा । चतुष्पलान्वितं सूक्ष्मं कल्पितं क्षालितं जले । पिप्पलीपिप्पलीमूलशुण्ठीचित्रकधान्यकैः । द्विशाणैः संयुते तोये क्वाथं सार्धाढकोन्मिते । मांसेऽस्मिन् द्विपलं तत्र दाडिमान्कुट्टितान्क्षिपेत् । तं रसं मर्दितं पूतं हिङ्गुसैन्धवजीरकैः । युक्तं प्रधूपितं पथ्यं शुद्धानां शुद्धिकांक्षिणाम् । शुष्यतां व्याधियुक्तानां व्रणिनां वातरोगिणाम् । भग्नविश्लिष्टसन्धीनां क्षीणधात्विन्द्रियौजसामिति"। तन्त्रान्तरे चोक्तम्—"रसस्तत्र वरोऽनम्लः शाकुनो बृंहणः सरः । तक्रसिद्धस्तु विष्टम्भी लघुर्वातकफापहः । फलाम्लगोरसोदारं सविश्वाजाजिधान्यकम् । स्निग्धं मांसं हितं बल्यं बृंहणं रोचनं गुरु । कासमर्दकधान्याम्लदाडिमादिरजःकृताः । लेहास्तक्रादिजाश्चान्ये योनिवद् गुरुरोचनाः । मालुधानीयवासादिपुष्पैर्योऽतिगुणः खलः । फलमूलैर्घनादानं व्यञ्जनं पाकतो घनम्" । लेहवत्खलः इत्यन्ये । दोषलाः स्वस्वयोनिवत् । "तद्वच्च तिलकल्काम्लप्रायः काम्बलिको मतः । कट्वरः कफजिद्ग्राही पित्तलो रोचको लघुः । मांसादजातिशुण्ठ्यादिगलितः सोदको लघुः" ।

**मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम् ॥ ३१ ॥**

मौद्गो रसो यूषो व्रणिनां कण्ठरोगिणां च पथ्यः । अस्य च संस्कृतस्य विधानमुक्तम्—" मुद्गानां द्विपलं तोये श्रृतमर्धाढकोन्मिते । पादस्थं मर्दितं पूतं दाडिमस्य पलेन तु । युक्तं सैन्धवविश्वाह्वधान्यकैः पादकार्षिकैः । कणाजीरकयोश्चूर्णाच्छाणैकेनावचूर्णितम् । संकृतो मुद्गयूषोऽयं पित्तश्लेष्महरो मतः " । तथा—" पटोलपत्राच्छाणार्धं मुद्गानां द्विपलं, जले । द्रव्याद् द्वात्रिंशद्गुणिते, ततश्च दाडिमात्पलम् । कर्षमामलकानां च क्षिप्त्वा पुनरधिश्रयेत् । पूतं तत्सैन्धवाद्यैश्च युक्तमाज्येन योजितम् । पटोलपत्रकाख्योऽयं यूषः पित्तोत्थरोगजित् । निम्बपत्रैर्निम्ब-

यूषमेवमेव प्रकल्पयेत् । मूलकाच्छुरिठका स्विन्ना घृतभृष्टा सधान्यका । हिङ्गुजीरक-संयुक्ता ततो मथितदाडिमे । ससैन्धवे विनिक्षिप्य पुनरग्नावधिश्रयेत् । तावद्याव-न्मृदूभूतं ततस्त्र्यूषणसंयुतम् । सुधूपितं हिंगुघृतैश्चातुर्जातावचूर्णितम् । शुण्ठी-रसं दीपनीयं वातश्लेष्मामयापहम् । अकृताकृतयूषाच्च रसाच्च जलसाधितात् । स्नेहा-म्लपटुयुक्ताच्च पूर्वः पूर्वो लघुर्मतः । विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम् । गौरवं तनुसान्द्राम्लस्वादुष्वेषु पृथक्क्रया "। तथोक्तम्—" खलकाम्बलिकौ हृद्यौ साधितौ स्वौषधानुगौ । पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः । मूलैश्च तिलकल्काम्लप्रायः काम्बलिकः स्मृतः । ज्ञेया कृताकृतास्ते तु स्नेहादियुतवर्जिताः । अल्पमांसादयः स्वच्छा दकलावणिकाः स्मृताः "। स्वल्पेन मांसेन शुण्ठ्यादिभिः स्वल्पैः स्वच्छा ये क्रियन्ते ते दकलावणिका बोध्याः । एवं यूषे यत्र धान्यमल्पं खलादौ वा मूलादीन्यल्पानि तस्याऽपि दकलावणिकत्वं बोध्यम् । तन्त्रान्तरे चोक्तम्—" अथ गोरसधान्याम्लफलाम्लैरम्लितं च यत् । यथोत्तरं लघु हितं संस्कृतासंस्कृतं तथा । प्रभूतास्तमलो यूषः सूपाल्लघुतरः स्मृतः। सूपस्तु रसयूषाभ्यां स्थैर्याद् गुरुतरो मतः । तं सरोगो न चाश्नीयान्न चाल्पाशी कथञ्चनेति ।"

**वातानुलोमी कौलत्थो गुल्मतूनीप्रतूनिजित् ।**

कौलत्थो यूषो वातमनुलोमयति गुल्मादींश्च जयति । तूनिप्रतूनी रोगौ गुल्म-निदाने वक्ष्यमाणलक्षणौ ।

**तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ॥ ३२ ॥**
**शाण्डाकीवटकं दृग्घ्नं दोषलं ग्लपनं गुरु ।**

तिलस्य विकृतिः पिण्याकस्य च । तथा शुष्कशाकादि दृष्टिघ्नं त्रिदोषकरं ग्लानिकरं गुरु च। अङ्कुरितं सस्यं विरूढकम् । शाण्डाक्यपि तन्त्रादिका (?) शाण्डा-कीवटकम् ।

**रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ॥ ३३ ॥**

रसाला करमथितेन मरीचशर्करादियुक्तेन दध्ना कृता उल्लेखिकासंज्ञा बृंहणी देहस्य बृहत्त्वकरी वृष्यादिगुणयुक्ता च ।

**श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ।**
**विष्टम्भि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत् ॥ ३४ ॥**

पानकं श्रमादिहरं प्रीणनादिगुणयुक्तम् । प्रीणनं मनःप्रीतिकरं यथाद्रव्यगुणं च । स्वादुना गुणेन च युक्तम् । पर्पटादीनां लाघवादिह गुणा नोक्ताः । यथा । "पर्पटा लघवो रुच्या लघीयान् क्षारपर्पटः । हृद्या वृष्या रुचिकरा गुरवो रागखा-ण्डवाः । प्रीणना भ्रमतृट्छर्दिमदमूर्च्छाश्रमच्छिदः" ।

**लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः ।**
**कासपित्तोपशमना दीपना लघवो हिमाः ॥ ३५ ॥**



लाजास्तृडादींश्छिन्दन्ति। कासपित्ते चोपशमयन्ति। तथा दीपना लघवः शीतवीर्याश्च।

**पृथुका गुरवो बल्याः कफविष्टम्भकारिणः।**

हरितधान्यानि निस्तुषभृष्टमुशलहतानि पृथुकाश्चिपिटसंज्ञा गुरुत्वादियुक्ताः।

**धाना विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुः॥ ३६॥**

धाना भृष्टयवादिर्विष्टम्भिनी रूक्षादिगुणयुक्ता च।

**सक्तवो लघवः क्षुत्तृट्श्रमनेत्रामयव्रणान्।**
**घ्नन्ति सन्तर्पणाः पानात्सद्य एव बलप्रदाः॥ ३७॥**
**नोदकान्तरितान्न द्विर्न निशायां न केवलान्।**
**न भुक्त्वा न द्विजैश्छित्त्वा सक्तूनद्यान्न वा बहून्॥ ३८॥**

सक्तवो लघवः क्षुधादींश्च घ्नन्ति। तथोदकमिश्रिताः सन्तर्पणाः सद्य एव बलं कुर्वन्ति। तांश्च जलेनान्तरितान्व्यवहितान्नाश्नीयात्। अन्यभोजनेषु ह्यन्तरा पानं विहितं न तथा सक्तुषु कार्यमिति बोधयति। तथा न द्विर्द्वौ वारौ नाद्यात्। न निशायां रात्र्याम्। न केवलानुदकादिरहितान्। न भुक्त्वाऽन्यद्भोजनादि। न द्विजैश्छित्वा दन्तैः करस्थं पिण्डं छित्त्वेत्यर्थः। बहूंश्च सक्तून्नाद्यात्। तन्त्रान्तरे चोक्तं रूक्षवातलत्वं सक्तूनामिह नोक्तम्। लघुत्वादिनैवावगतत्वात्। ननु रूक्ष-वातलं चेदभ्युपगम्यते सक्तूनां, ततः सन्तर्पणा इत्यनुपपन्नम्? सद्य एव बलप्रदा इत्येतदप्ययुक्तम्? युक्त्या ह्याहारः परिणमति। स धातुपुष्ट्यै नान्यथा। अत्रा-चक्ष्महे—प्रभावादुभयमप्येतदुक्तम्। सक्तूनां ह्ययमचिन्त्यः प्रत्यक्षवेद्यः प्रभावो यत्पीताः सन्तः सन्तर्पयन्ति, सद्य एव च बलं प्रयच्छन्ति। यथा वाजीकरणं ह्यपरिणतमेव स्वकार्यं जनयति। यथा च मद्यं परिणतमेव मदं जनयति, तथा-सन्तर्पणत्वं बलप्रदत्वं चैषामुपपन्नमेव। तन्त्रान्तरे चोक्तम्—"तुल्याज्यः सक्तु-प्राशस्तु वृष्यो भेदी रसायनम्। तृट्छर्दिश्रमनुन्मद्यपीततृष्णानिवर्तकः। प्रमेह-क्षयकुष्ठानि न च स्युर्मन्थपायिनाम्। निचयात्कठिना गुर्वी पिण्डी प्रोक्ता, मृदु-र्लघुः। सक्तूनां द्रवतायोगाल्लघीयस्यवलेहिका। लाजसक्तुकृताऽपि स्याद्विलेपी तु गरीयसी"।

**पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टिदूषणः।**

पिण्याकाख्यो यस्तिलादीनां निष्पीडितः कल्को ग्लपनो ग्लानिकरः। ग्लपन इति ग्लायतेर्णिजन्ताद् ग्लास्नावनुवमां चेति मित्त्वाद् ध्रस्वः, बाहुलका-त्कर्तरि ल्युट्। तथा विष्टम्भी, दृष्टिविकारकृच्च।

**वेसवारो गुरुः स्निग्धो बलोपचयवर्धनः॥ ३९॥**

वेसवारो नागरधान्यकाऽजाजिहिङ्गुघृतादिसंस्कृतं कुट्टितं मांसम्। गुरुः स्निग्धो बलवर्धनः शरीरोपचयवर्धनश्च।





**मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ।**

मुद्गादिजास्तु वेसवारा ये इण्डरिकादिभिर्द्रव्यैः सूक्ष्मच्छिन्नैः क्रियन्ते लोके पूरणशब्देन प्रसिद्धास्ते गुरवः प्रकृतिद्रव्यगुणाश्च । आदिशब्देन माषादयो गृह्यन्ते । तन्त्रान्तरे चोक्तम्–" सर्पिस्तैलगुणक्षीरैर्यवगोधूमपैष्टिकाः । पूपा विष्टम्भिनः शीताः पौष्टिका वातलाः खराः । वृष्याः बल्याः सरा माषैर्वातघ्ना मृदुपिच्छिलाः । यथाऽन्नं गुरवो बल्याः स्थूलाश्च कठिनाश्च ये । तैलपक्वास्तु दृष्टिघ्ना गरीयांसो विदाहिनः । कासारसारलघवो लाजैर्लघुतराः स्मृताः । वातपित्तहरो वृष्यो घृतपूरः कफप्रदः । सद्यः प्राणकरो रुच्यो मांसलो रक्तलो गुरुः । लघीयान्मण्डकक्तो गरीयान्फलपूरितः । मधुरोत्कारिका वृष्या कासारः पिच्छिलो गुरुः । गुडमत्स्यण्डिकाखण्डक्षीरेक्षुरसमाक्षिकैः । पूपाः शुक्रबलश्लेष्मरुचिदास्तर्पणाः क्षणात् । नानाद्रव्यैः समायुक्ताः पक्वामक्लिन्नभर्जिताः । निमर्दको गुरुः स्निग्धो वृष्यो बलवतां हितः । खारिकेन्दुरिकापूरवटिकावटकादयः । विशदा रोचना बल्या गुरवः स्युः स्त्रयोनिवत् । यावकः पिच्छिलः स्निग्धः प्लीहोदावर्तहा गुरुः । भृष्टक्लिन्नतया वाट्यो लघुः सेव्योऽतिकासिनाम् । ज्वरोदावर्तमेहानां पथ्यो वातानुलोमनः । ओलकं हरितावस्थं शिम्बिजत्वात्खरं गुरु । मन्दजर्यो यवादित्वादभ्योषो बृंहणः सरः " । सिद्धसारे चोक्तम्—" अत्युष्णा मण्डकाः पथ्याः शीतला गुरवो मता " इति ।

**कुकूलकर्परभ्राष्ट्रकन्द्वङ्गारविपाचितान् ॥ ४० ॥**
**एकयोनींल्लघून्विद्यादपूपानुत्तरोत्तरम् ।**

अपूपान् कुकूलादिसिद्धानेकयोनीनेककारणान्यथोत्तरं लघून्विद्यात् । तेन कुकूलपकात् सजातीयादपूपात्कर्परपक्वो लघुः । कर्परपक्वाच्च भ्राष्ट्रपकः । भ्राष्ट्रपकात्कन्दुपकः । कन्दुपकाच्चाङ्गारपकः । कुकूलं गोअरं गोशकृदादिचूर्णसन्तापः । कर्परो ज्वालातप्तं कपालम् । भ्राष्ट्रकन्दू प्रसिद्धावेव । अङ्गारा बृहन्तः काष्ठसम्भूता इति ।

इति कृतान्नवर्गः ।

कृतान्नवर्गानन्तरं मांसशाकवर्गयोस्तद्व्यञ्जनभूतयोर्निर्देशः । तत्राऽपि प्राधान्यान्मांसवर्गस्य पूर्वं निर्देशः । प्राधान्यं चाऽस्य भक्तेन सह प्रचुरोपयोगेऽप्यदोषात् । शाकस्य तु बहूपयोगे दोषं वक्ष्यति–"शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेदि"त्यनेन ।

मांसवर्गः—

**हरिणैणकुरङ्गर्क्षगोकर्णमृगमातृकाः ॥ ४१ ॥**
**शशशम्बरचारुष्कशरभाद्या मृगाः स्मृताः ।**

हरिणादयो दश मृगाः स्मृताः । आदिशब्देन कालपुच्छकपृषतादयः सङ्ग्रहोक्ता गृह्यन्ते–"कालपुच्छकचारुष्कवरपोतशशोरणाः । श्वदंष्ट्रामहारभकोहकारकशम्बराः । करालकृतमालौ च पृषतश्च मृगाः स्मृता" इति ।

---

भौ० टि० १–इण्डरीशब्दः प्रायेण माषमुद्गयोः सहचर एव दृश्यते शास्त्रे । एतन्निर्माणप्रकारश्च "चर्य्याचन्द्रोदयस्य" दिनचर्याध्याये द्रष्टव्यः ।

लाववर्त्तीकवार्त्तीररक्तवर्त्मककुक्कुभाः ॥ ४२ ॥
कपिञ्जलोपचक्राख्यचकोरकुरुवाहवः ।
वर्तको वर्तिका चैव तित्तिरिः क्रकरः शिखी ॥ ४३ ॥
ताम्रचूडाख्यबकरगोनर्दगिरिवर्तिकाः ।
तथा शारपदेन्द्राभवारटाश्चेति विष्किराः ॥ ४४ ॥

तत्र लावादयो वारटान्ता एकविंशतिः । विकीर्य भक्षणाद्विष्किराः । रक्ते वर्त्मनी यस्य स रक्तवर्त्मकः । वर्तको वर्तिकेति जात्यन्तरं, नतु वर्तकस्य स्त्री वर्तिका । यथा च बलाका सारिकेति । पुंस्यपि स्त्रीलिङ्गत्वावेशात् । शिखी मयूरः । त्रीह्यादिः (?) ।

जीवञ्जीवकदात्यूहभृङ्गाह्वशुकसारिकाः ।
लट्वाकोकिलहारीतकपोतचटकादयः ॥ ४५ ॥
प्रतुदाः

जीवञ्जीवकादयः प्रतुदा दश स्मृताः । प्रतुद्य तुण्डेनाऽहत्य शाल्यादेर्भक्षणात्प्रतुदाः । आदिशब्देन सङ्गृहीताः खञ्जरीटकपारावता गृह्यन्ते ।

भेकगोधाहिश्वाविदाद्या बिलेशयाः ।

भेकादयश्चत्वारो बिलेशयाः । बिले बाहुल्येन शयनाद्बिलेशयाः । आदिशब्देन श्वेतश्यामशल्यकादयो गृह्यन्ते ।

गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ॥ ४६ ॥
मार्जारमूषिकव्याघ्रवृकबभ्रुतरक्षवः ।
लोपाकजम्बुकश्येनचाषवान्तादवायसाः ॥ ४७ ॥
शशघ्नीभासकुररगृध्रोलूककुलिङ्गकाः ।
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ॥ ४८ ॥

गवादयः प्रसह्याहृत्य भक्षणात्प्रसहाः । मृगाश्च पक्षिणश्च मृगपक्षिणः । केचिन्मृगाः केचित्पक्षिण इत्यर्थः । अश्वतरो वेगसरः । अश्वस्तुरगः । बभ्रुर्जाहको नकुल इत्यन्ये । लोपाको लोमशः । जम्बुकः शृगालः । श्येनो गरुडाकृतिः । चाषः किकीदिविः । वान्तादः श्वा । वायसः काकः । उलूकः काकारिः । कुलिङ्गकः कृष्णचटकः ।

वराहमहिषन्यङ्कुरुरुरोहितवारणाः ।
सृमरश्चमरः खड्गो गवयश्च महामृगाः ॥ ४९ ॥

वराहादयो दश महामृगसंज्ञाः । वारणो हस्ती ।

हंससारसकादम्बबककारण्डवप्लवाः ।
बलाकोत्क्रोशचक्राह्वमद्गुक्रौञ्चादयोऽप्चराः ॥ ५० ॥



हंसादयः क्रौञ्चान्ता अप्सु चरणादप्चरसंज्ञाः । आदिशब्देन रक्तशीर्षकादयो गृह्यन्ते ।

**मत्स्या रोहितपाठीनकूर्मकुम्भीरकर्कटाः ।**
**शुक्तिशङ्खोद्रुशम्बूकशफरीवर्मिचन्द्रिकाः ॥ ५१ ॥**
**चुलूकीनक्रमकरशिशुमारतिमिङ्गिलाः ।**
**राजीचिलिचिमाद्याश्च**

रोहितकादय एकोनविंशतिर्जलोद्भवा मत्स्यसंज्ञाः । चशब्दोऽनुक्तकदलकपर्दकादिसमुच्चयार्थः ।

**मांसमित्याहुरष्टधा ॥ ५२ ॥**

इत्यष्टभिः प्रकारैः शास्त्रकारा मांसमाहुः ।

**योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते ।**

योनिषु पूर्वोक्तास्वष्टासु मध्ये व्यामिश्रगोचरत्वाद्व्यामिश्रविषयत्वादजावी व्यामिश्रेऽजावी छागोरभ्रे तेऽनिश्चिते । ते हि जाङ्गलेऽपि देशे वर्तेते अनूपेऽपि । अजावी इति स्त्रीलिङ्गनिर्देशोऽत्र विवक्षित एव । केचित्त्वनिश्चिताविति निजगदुः । तत्र तित्तिरिरपि धन्वानूपचारी प्रथितः । तत्कथमसौ हि जाङ्गलः कीर्तितः । ब्रूमः । तत्स्वभावत्वात् । यद्यप्युभयचरोऽयं तथाऽपि जाङ्गलस्वभावत्वाज्जाङ्गलोऽयं भक्षणे । अत्र विष्किरत्वं तित्तिरे निश्चितं निमित्तमस्ति । तस्मादयं जाङ्गल एव युक्तः । हरिणादीनां च किरातकैवर्तादिभ्यो नानादेशप्रसिद्धा संज्ञा वेद्याः ।

**आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ ॥ ५३ ॥**

आदौ भवा आद्या मृगविष्किरप्रतुदाख्या जाङ्गलचारित्वाज्जाङ्गलशब्दवाच्या एव। महामृगाऽप्चरमत्स्याख्या आनूपाः। मध्यौ द्वौ बिलेशयप्रसहाख्यौ साधारणौ। जाङ्गलानूपचारिणावित्यर्थः । मध्याविति द्विवचननिर्देशसामर्थ्यादाद्यन्तानां वर्गाणां प्रत्येकं त्रिधात्वमनुमीयते त्रिग्रहणमन्तरेणापि ।

**तत्र बद्धमलाः शीता लघवो जाङ्गला हिताः ।**
**पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥ ५४ ॥**

तत्र तेषु जाङ्गलानूपसाधारणेषु मध्ये जाङ्गला बद्धमला ग्रथितं पुरीषं कुर्वन्ति । शीतवीर्या लघवः । सन्निपाते हिताः । किम्भूते । पित्तोत्तरे पित्ताधिके । तथा वातो मध्यो यस्मिंस्तस्मिन्मध्यममरुति । तथा कफानुगे कफोऽनुगोऽबलो हीनो यस्मिंस्तस्मिन् स्वल्पश्लेष्मणि ।

**दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः ।**

शशोऽग्निदीपनः पाके कटुको ग्राही रूक्षः शीतश्च । ग्राहिशीतत्वं चाऽस्य जाङ्गलत्वादेव लब्धमित्यतिशयार्थं पुनरिहोपात्तम् । स्वादुकषायत्वादिकमेषामिह युक्त्योक्तम् । संग्रहे तु स्पष्टं कृत्वोक्तम् । यथा—"तत्र बद्धमला रुच्या मांसानामुत्तमा

हिमाः । कषायस्वादुविशदा लघवो जाङ्गला हिताः । ताम्रोऽथ हरिणः कृष्णस्त्वेणो हृद्यस्त्रिदोषजित् । लघीयान् षड्रसश्चासौ ग्राही रूक्षो हिमः शशः । कटुपाकोऽग्निकृत्पथ्यः सन्निपातेऽनिलावर" इति ।

**ईषदुष्णा गुरुस्निग्धा बृंहणा वर्तकादयः ॥ ५५ ॥**
**तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ।**
**ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ॥ ५६ ॥**

वर्तकादारभ्य यावज्जाङ्गलसमाप्तिस्तावत्सर्वे औष्ण्यगौरवस्निग्धत्वैरल्पैर्युक्ताः । तेष्वपि मध्ये तित्तिरिः श्रेष्ठो मेधादिकरश्च । तथा सङ्ग्रहणो वर्ण्यो वाताधिकसन्निपातहरश्च । स च तित्तिरिर्धन्वन्यानूपे च देशे विचरत्यतः स्निग्ध उष्णो गुरुर्बृंहणश्च । तथा च सङ्ग्रहे—"धन्वानूपविचारित्वात् स्निग्धोष्णगुरुबृंहणः" इति ।

**नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ।**

शिखी बर्हीं नातिपथ्यः श्रोत्रादीनां पथ्यो वयसः स्तम्भनकारित्वेन पथ्यः ।

**तद्वच्च कुक्कुटो वृष्यः**

तद्वच्च कुक्कुटो मयूरतुल्यगुणो वृष्यश्च ।

**ग्राम्यस्तु श्लेष्मलो गुरुः ॥ ५७ ॥**

ग्राम्यः पुनः कुक्कुटः श्लेष्मलो गुरुश्च ।

**मेधाऽनलकरा हृद्याः क्रकराः सोपचक्रकाः ।**

क्रकरोपचक्रकाश्च मेधामग्निं च कुर्वन्ति हृद्याश्च ।

**गुरुः सलवणः काणकपोतः सर्वदोषकृत् ॥ ५८ ॥**

काणः कपोतो गुरुरीषल्लवणस्त्रिदोषकृच्च ।

**चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम् ।**

चटकाः श्लेष्मलादियुक्ता अतिशयेन शुक्रकृतश्च ।

**गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ॥ ५९ ॥**
**मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः ।**

अतोऽनन्तरं बिलशयाद्या वर्गा यथोत्तरं गुरुत्वेनोष्णत्वेन स्निग्धत्वेन मधुरत्वेन चाधिकाः । यो यस्मादुत्तरो वर्गः स तस्माद् गुरुत्वादिभिरधिक इत्यर्थः । तथा यथोत्तरमेव मूत्रशुक्रकृतो बल्या वातघ्नाः श्लेष्मपित्तलाश्च ।

एवं वर्गपञ्चकस्य सामान्यगुणानुक्त्वाऽपवादमाह ।

**शीता महामृगास्तेषु क्रव्यादाः प्रसहाः पुनः ॥ ६० ॥**
**लवणानुरसाः पाके कटुका मांसवर्धनाः ।**
**जीर्णार्शोग्रहणीदोषशोषार्तानां परं हिताः ॥ ६१ ॥**

तेषु वर्गेषु मध्ये महामृगाः शीतवीर्याः । क्रव्यमाममांसं भुञ्जते ये ते क्रव्यादाः । क्रव्यादास्तु ये प्रसहा मार्जारगृध्रोलूकादयस्ते लव-

णानुरसाः पाके कटुका मांसवर्धनाश्चातितराम्। जीर्णप्रभृत्यामयानामतिशयेन हिताः।

**नातिशीतं गुरुः स्निग्धं मांसमाजमदोषलम्।**
**शरीरधातुसामान्यादनभिष्यन्दि बृंहणम्॥ ६२॥**

नातिशब्दोऽत्रेषदर्थे। यदि तु प्रतिषेधनमात्रमभीष्टमभविष्यदाचार्यस्य ततो नञ एव केवलस्योपादानमकरिष्यत्। तस्मादीषदर्थ एव विवक्षितः। अत एवं व्याख्यानयन्ति। अदोषलमिति। अल्पदोषलम्। यथाऽनतिदग्धो ग्राम इति। शरीरस्य धातुः शरीरधातुः प्रकृतत्वात्पुरुषशरीरस्य मांसाख्यो यो धातुस्तस्य सामान्यात्तुल्यत्वादाजं मांसमनभिष्यन्दि बृंहणं च। गुणकृतं चाऽत्र सामान्यं गृह्यते न द्रव्यकृतम्। द्रव्यकृते हि सामान्ये गृह्यमाणे तुरगोरगादिमांसमपि पुरुषशरीरधातोर्मांसाख्यस्य मांसत्वेन समानं भवतीति तदप्यनभिष्यन्दि बृंहणं च स्यान्न केवलमाजं मांसम्। गुणकृते तु सामान्ये गृहीते शरीरधातुसामान्यादाजमेव मांसमनभिष्यन्दि बृंहणं चेति वक्तुं युज्यते। मांसग्रहणं चाऽत्रोपलक्षणार्थम्। न केवलमाजं मांसं पुरुषशरीरधातुना मांसाख्येन तुल्यं यावदन्येऽपि ये छागशरीरगता धातवस्तेऽपि मनुष्यशरीरधातुना तुल्यगुणास्तेऽप्यनभिष्यन्दिनो बृंहणाश्च। अनया भङ्ग्या पुरुषमांसस्याऽप्याचार्येणाऽत्र गुणा उक्ताः। ननु बृंहणं यद् द्रव्यं तद्भौमाप्यमभिष्यन्दि च। अपामेवाऽसाधारणो धर्मः स्रवणरूपः। तत्कथमनभिष्यन्दीत्युक्तम्। ब्रूमः। द्रव्यप्रभावात् ईदृशोऽयं द्रव्यप्रभावो यद् बृंहणमपि द्रव्यमनभिष्यन्दीति।

**विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत्।**

अतोऽजमांसाद्विपरीतमाविकं मांसमत्युष्णं स्निग्धं गुरु सदोषमभिष्यन्दि चेति। बृंहणत्वस्याऽपि विपर्यये प्राप्ते तदपवादमाह। बृंहणं तु तदिति। तुशब्दोऽवधारणे। बृंहणमेव तदित्यर्थः।

**शुष्ककासश्रमाऽत्यग्निविषमज्वरपीनसान्॥ ६३॥**
**कार्श्यं केवलवातांश्च गोमांसं सन्नियच्छति।**

गोमांसं शुष्ककासादीन्नियच्छति।

**उष्णो गरीयान्माहिषः स्वप्नदार्ढ्यबृहत्त्वकृत्॥ ६४॥**

महिष उष्णो गुरुतरः स्वप्नादींश्च करोति। गुरुशब्दादीयसुनि प्रियस्थिरेत्यादिना गरादेशः। दार्ढ्यमिति वर्णदृढेत्यादिना ष्यञ्।

**तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः।**

वराहः सूकरस्तद्वन्महिषगुणो ज्ञेय इत्यर्थः। तथा श्रमहा रुच्यादिप्रदश्च।

**मत्स्याः परं कफकराः**

गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरमित्यनेन लक्षणेनाऽतिगुरूष्णस्निग्धमधुरत्वमतिमूत्रशुक्रकृत्त्वमतिबल्यत्वमतिवातघ्नत्वमतिकफपित्तलत्वं च मत्स्याना-

मुक्तम् । परं कफकरा इत्यनेनाऽतः कफकृत्तमा मत्स्या इति बोधयति । सङ्ग्रहे स्पष्टार्थमेवमुक्तम्–"कफपित्तकरा मत्स्याः परं पवननाशना" इति ।

**चिलिचीमस्त्रिदोषकृत् ॥ ६५ ॥**

चिलिचीमसंज्ञो मत्स्यस्त्रिदोषकरः ।

**लावरोहितगोधैणाः स्वे स्वे वर्गे वराः परम् ।**

लावादयः । स्वस्ववर्गेषु वरतराः । तत्र लावो विष्किरेष्वतिश्रेष्ठः । रोहितो मत्स्येषु । स हि प्रतिस्रोतोविचारी । आकाशप्लवनश्च । तथा चोक्तम्–"प्रतिस्रोतो-विचारित्वादाकाशप्लवनेन च । रोहितः प्रवरस्तेषामिति"। गोधा च बिलेशयेषु वरा। एणो मृगेष्विति ।

**मांसं सद्योहतं शुद्धं वयःस्थं च भजेत् ।**

मांसं सद्योहतं भजेत् । सद्योहतस्य मांसं भजेदित्यर्थः । तथा शुद्धं स्नाय्व-स्थ्यादिरहितम् । तथा वयसि तिष्ठतीति वयःस्थम् । यद्यपि सर्वं मांसं वयःस्थमेव तथाऽपीह वयःस्थमित्युक्त्या शोभनं तरुणं वय इति गम्यते । तस्माद्यूनः प्राणिनो मांसं भजेन्न बालवृद्धयोरिति ।

**त्यजेत् ॥ ६६ ॥**

**मृतं कृशं भृशं मेद्यं व्याधिवारिविषैर्हतम् ।**

मृतं स्वयं मृतं न भजेत् । अविज्ञातस्वरूपेण व्याधिना मृतस्य प्राणिनो यन्मांसं तत्त्यजेदित्यर्थः। कृशं दुर्बलं न भजेत् । तथा भृशं मेद्यमतिमेदुरं मांसं त्यजेत् । तथा व्याधिना निर्ज्ञातस्वरूपेण हतस्य वारिणा विषेण च हतस्य निर्जीवीकृतस्य यन्मांसं तत्त्यजेत्। सङ्ग्रहे तु हंसादीनां विशेषा उक्ताः । यथा— "हंसः स्वरकरः पित्तरक्तजिन्मधुरो हिमः । कुलीरः परमं वृष्यो बृंहणः प्रीणनो गुरुः । गोधा नियच्छति विषं मूषिकः शुक्रवर्धनः । गुरूण्यण्डानि बालानां कषायमधुरं पलम् । वृद्धानां स्नायुभूयिष्ठमबल्यं गुरु दोषलमिति" ।

**पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी गर्भिणी गुरुः ॥ ६७ ॥**
**लघुर्योषिच्चतुष्पात्सु विहङ्गेषु पुनः पुमान् ।**
**शिरःस्कन्धोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम् ॥ ६८ ॥**
**तथामपक्वाशययोर्यथापूर्वं विनिर्दिशेत् ।**
**शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम् ॥ ६९ ॥**
**मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम् ।**

पुंस्त्रियोः पूर्वपश्चार्धे यथासंख्यं गुरुणी । पूर्वं च पश्चं च पूर्वपश्चे तयोरर्धे । पुंसः पूर्वार्धं गुरु स्त्रियः पश्चार्धं गुर्वित्यर्थः । गर्भिणी गुरुः गर्भिणीमांसं गुरु । चत्वारः पादा येषां ते चतुष्पादस्तेषु चतुष्पात्सु गवादिषु मध्ये स्त्री लघुः । चतुष्पा-दितिसङ्ख्यासुपूर्वस्येत्यन्तलोपः । विहङ्गेषु द्विजेषु तु पुमांल्लघुः । शिरःप्रभृती-

नां मांसानां यथापूर्वं गुरुत्वं निर्दिशेत्। एवं सक्थ्यादिमांसेभ्यः शिरोमांसं गुरुतममित्यवतिष्ठते। आमपक्वाशययोश्च यथापूर्वं गुरुत्वनिर्देशः। तेन पक्वाशयादामाशयो गुरुः। रक्तादीनां धातूनां यथोत्तरं गुरुत्वं निर्दिशेत्। तेन लोहितान्मांसं गुरु मांसान्मेद इत्यादि। मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदमित्यत्राऽप्युत्तरोत्तरमित्यनुवर्तते। तेन मांसाद्गुरुतरो वृषणस्तस्मान्मेढ्रो यावत्सर्वं गरिष्ठं गुदं निर्दिशेत्।

इति मांसवर्गः।

मांसवर्गादनन्तरं शाकवर्गो निगद्यते।

शाकवर्गः—

**शाकं पाठासठीपूषासुनिषण्णसतीनजम्॥ ७०॥**
**त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम्।**

पाठादिजं शाकं त्रिदोषहरं लघु ग्राहि च तद्वद्राजक्षवकवास्तुकम्।

**सुनिषण्णोऽग्निकृद्वृष्यस्तेषु**

तेषु मध्ये सुनिषण्णः स्वस्तिकाख्यो जलमध्ये भवति। पत्रैश्चाङ्गेरीतुल्योऽग्निकरोऽपि वृष्यः।

**राजक्षवः परम्॥ ७१॥**
**ग्रहण्यर्शोविकारघ्नः**

राजक्षवः क्षुद्बोधनो राजशाकाख्योऽत्यर्थं ग्रहण्यर्शोविकारघ्नः।

**वर्चोभेदि तु वास्तुकम्।**

वास्तुकं तु पुनः टक्कवास्तुकाख्यं वर्चोभेदि पुरीषस्य भेदनम्।

**हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनम्॥ ७२॥**
**काकमाची सरा स्वर्या**

काकमाची त्रिदोषघ्नी कुष्ठनाशनी वृष्या किञ्चिदुष्णा सरा भेदिनी स्वरहिता च स्वर्या। स्वास्थ्यसंवाहकत्वेन च रसायनसादृश्याद्रसायनम्।

**चाङ्गेर्यम्लाऽग्निदीपनी।**
**ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः॥ ७३॥**

चाङ्गेरी क्षुद्राम्लिकाम्ला चाग्निदीपनी ग्रहण्यादिषु हिता। उष्णवीर्या ग्राहिणी लघ्वी च।

**पटोलं सप्तलारिष्टशार्ङ्गेष्टावल्गुजाऽमृताः।**
**वेत्राग्रं बृहती वासा कुन्तली तिलपर्णिका॥ ७४॥**
**मण्डूकपर्णी कर्कोटकारवेल्लकपर्पटाः।**
**नाडीकलायं गोजिह्वा वार्ताकं वनतिक्तकम्॥ ७५॥**
**करीरं कुलकं नन्दी कुचेला शकुलादनी।**
**कटिल्लं केम्बुकं शीतं सकोशातककर्कशम्॥ ७६॥**
**तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित्।**



पटोलादीनि कर्कशान्तान्यष्टाविंशतिः शीतवीर्याणि तिक्तानि पाके कटूनि ग्राहीणि वातलानि कफपित्तघ्नानि च । सप्तला सातला । अरिष्टो निम्बः । शार्ङ्गेष्टाऽङ्गारवल्लिका । अवल्गुजा बाकुची । अमृता गुडूची । वेत्रो वंशसदृशस्तस्याऽग्रम् । वासा वृषः । कुन्तली सूक्ष्मतिलजातिः । तिलपर्णी बदरकः । मण्डूकपर्णी आदित्यपर्णी वा ब्राह्मी । कर्कोटकारवेल्ले पुनः प्रथिते एव । पर्पटः शीतप्रियाख्यः । नाडीकलायं सकुलात्तकः सुवर्चलाभेदः । गोधूमिका तु गोजिह्वा गोजी क्रोष्टुकमूलिका । वनतिक्तकं वत्सकः । कुलकं काकतिन्दुकः । नन्दी जयवृक्षश्च शब्दितः । कुचेला पाठा । शकुलादनी कटुका । कटिल्लं दीर्घपत्रा वर्षाभूः । कोशातकी घण्टोलिः । कर्कशः कम्पिल्लकः ।

सामान्यगुणानुक्त्वा केषांचिद्गुणकर्मविशेषमाह—

**हृद्यं पटोलं कृमिनुत्स्वादुपाकं रुचिप्रदम् ॥ ७७ ॥**
**पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम् ।**

मुनिनाऽप्युक्तम्—"पटोलपत्रं पित्तघ्नं वल्ली चास्य कफापहा । फलं त्रिदोषशमनं मूलं चास्य विरेचनमिति" । बृहतीद्वयं स्थूलबृहती महोटिकाख्या । क्षुद्रबृहती कण्टकारिकाख्या । तदेतदुभयं पित्तकरमग्निदीपनं शकृदादीनां भेदनं वातघ्नं च ।

**वृषं तु वमिकासघ्नं रक्तपित्तहरं परम् ॥ ७८ ॥**

वृषं छर्दिकासौ हन्ति । रक्तपित्तं चात्यर्थं जयति ।

**कारवेल्लं सकटुकं दीपनं कफजित्परम् ।**

कारवेल्लमीषद्रसे कटुकमग्निदीप्तिकरमतिश्लेष्मघ्नम् ।

**वार्त्ताकं कटु तिक्तोष्णं मधुरं कफवातजित् ॥ ७९ ॥**
**सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम् ।**

वार्त्ताकं रसे कटु तिक्तमुष्णवीर्यं मधुरं वातश्लेष्मघ्नम् । सह क्षारेण वर्तते सक्षारं किञ्चित्क्षारत्वयुक्तमग्निजननम् । हृद्यं हृदयाय हितम् । रुच्यं रुचिकृत् । अपित्तलम् । नञीषदर्थे । किञ्चित्पित्तकरमित्यर्थः । तत्र सह क्षारेण वर्तते सक्षारमित्येवं कथमुक्तम् । यावता क्षारं द्रव्यम् । तथा च प्रागुक्तं क्षरणादित्यादि । न द्रव्यं द्रव्येण सह वर्तते । तथा च गुणानामेवाऽयं धर्मो यद् द्रव्याश्रितत्वं नाम । तस्मात्क्षारमित्ययुक्तमिव मन्यामहे । अत्राऽऽचक्ष्महे । क्षारशब्देनाऽत्र क्षारधर्म उपलक्ष्यते विस्रावणाद्यात्मकस्तद्वत्सक्षारमिति द्रव्यमुपदिश्यते । तस्मात्सक्षारमित्युपपन्नम् ।

**करीरमाध्मानकरं कषायस्वादुतिक्तकम् ॥ ८० ॥**

करीरं गूढपत्राख्यमाध्मानकरं रसे कषायमधुरतिक्तकम् ।





**कोशातकाऽवल्गुजकौ भेदनावग्निदीपनौ ।**

अनयोश्च पित्तकारित्वं वातकफघ्नत्वं च वेद्यम् । तथाहि । प्रायेण यदूक्षं गुडूच्यादिद्रव्यं तत्पित्तलं वातपितकफहरं च दृष्टम् । तथा चाह मुनिः—"कफवातनुदवल्गुज" इति । तदेवमन्यत्राऽप्यौचित्येन दोषकरत्वादि कल्प्यम् । सङ्ग्रहे चान्येऽप्युक्ताः, यथा—"सतरूठं कन्दकं च चक्षुर्ग्राहि हिमं गुरु । कुमारी जीवलोणिका नलिनी गुचुपर्णिका । स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु । श्यामा शाल्मलिकाश्मर्यः फञ्जी कर्णिकयूथिका । वृक्षादनी क्षीरवृक्षा बिम्बी तनिकवृक्षिका । रोध्रः शाणः कर्बुदारः सशेलुर्वृषमूषिका । भल्लातकः कोविदारः कमलोत्पलकिंशुकम् । पटोलादिगुणं स्वादु कषायं पित्तजित्परम् । वातपित्तहरा रूढा पर्विणी दीर्घपुष्पिका । लघुरुष्णतरा तिक्ता सारुबूका च लाङ्गली । वातला कटुतिक्ताम्लभेदिनौ तिलवेतसौ । विश्वं रास्ना बलाशाकं वातघ्नमतिसारनुत् । वातं वत्सादनी हन्यात्कफं करण्डरिचित्रकाविति" । मुनिना चान्येऽप्युक्ताः—"न्यग्रोधोदुम्बराऽश्वत्थप्लक्षपद्मादिपल्लवाः । कषायाः स्तम्भनाः शीता हिताः पित्तातिसारिणाम्" । तथा सुश्रुते गदितम्—"करीरकुसुमं ज्ञेयं कफपित्तहरं लघु । आगस्त्यं नातिशीतोष्णं नक्तान्धानां प्रशस्यते । चातुर्थकज्वरहरं नस्ययोगेन शीलितम् । राजवृक्षस्य निम्बस्य शिग्रोः सिंहमुखस्य च । कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च । श्रेयसी बिल्वपर्णी च बिल्वपत्रं च वातनुदिति" ।

**तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः ॥ ८१ ॥**
**मदपित्तविषास्रघ्नः**

तण्डुलीयो मण्डीरकाख्यः शीतवीर्यो रूक्षः स्वादुपाकरसो लघुर्मदादिनाशनश्च ।

**मुञ्जातं वातपित्तजित् ।**
**स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत्परम् ॥ ८२ ॥**

मुञ्जातं वातपित्तघ्नं स्निग्धादिगुणयुतमतिशुक्रकृच्च ।

**गुर्वी सरा तु पालक्या**

पालक्या गुर्वी तथा सरा शकृदादिभेदिनी । तुशब्दः पिच्छिलश्लेष्मलहिमादीनां संङ्ग्रहोक्तानां समुच्चयार्थः । तथा चोक्तं सङ्ग्रहे । "पालक्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमेति" ।

**मदघ्नी चाप्युपोदिका ।**

उपोदिका मदनाशिनी । अपिशब्दात्तद्वद् गुर्वी सरा च । उपोदिका मयाला खण्डपालक्येति प्रथिता ।

**पालक्यावत्स्मृतश्चञ्चुः स तु सङ्ग्रहणात्मकः ॥ ८३ ॥**

चञ्चुः पालक्यासदृशो गुणैः स्मृतः । स पुनश्चञ्चुः संग्रहणात्मको न भेदी ।

**विदारी वातपित्तघ्नी मूत्रला स्वादु शीतला ।**

**जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या रसायनम् ॥ ८४ ॥**

विदारी शृगालिका वातपित्तहरा मूत्रलादिगुणयुक्ता रसायनं च। कन्दस्यैवायं गुणनिर्देशो बोध्यः। तथा च मुनिः—"जीवनो बृंहणो वृष्यो बल्यः शस्तो रसायनम्। विदारिकन्दः कण्ठ्यश्च मूत्रलः स्वादुशीतल" इति।

**चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा।**

जीवन्ती चक्षुष्यादिगुणयुक्ता। या मधुरा सा शीतवीर्या। एभिर्गुणैः किञ्चिदूना। तथा चोक्तं सङ्ग्रहे—"चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा। शाकानां प्रवरा न्यूना द्वितीया किंचिदेव तु"। मुनिना तु जीवन्त्याः शतावर्या वातपित्तहरत्वमगादि। तत्पाठो हि—"भण्डीशतावरीशाकं बलाजीवन्तिजं च यत्। पर्वाण्या पर्वपुष्पा च वातपित्तहरं मतमिति"।

**कूष्माण्डतुम्बकालिङ्गकर्कार्वेर्वारुतिण्डिशम् ॥ ८५ ॥**
**तथा त्रपुसचीनाकचिर्भटं कफवातकृत्।**
**भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु ॥ ८६ ॥**

कूष्माण्डादिकं कफवातकृद्भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु च।

अत्र विशेषमाह।

**वल्लीफलानां प्रवरं कूष्माण्डं वातपित्तजित्।**
**बस्तिशुद्धिकरं वृष्यम्**

वल्लीफलानां मध्ये कूष्माण्डं पुष्पफलसंज्ञं वरं तथा वातपित्तहरं बस्तिशुद्धकरं वृष्यं च।

**त्रपुसं त्वतिमूत्रलम् ॥ ८७ ॥**

त्रपुसं पुनरतिशयेन मूत्रलम्।

**तुम्बं रूक्षतरं ग्राहि कालिङ्गैर्वारुचिर्भटम्।**
**बालं पित्तहरं शीतं विद्यात्पक्वमतोऽन्यथा ॥ ८८ ॥**

तुम्बमलाबुसंज्ञं रूक्षतरम्। एर्वारुकाद्यपि रूक्षं तुम्बं त्वतिशयेनेत्यर्थः। तथा ग्राहि। पूर्वाणि तु सामान्यगुणोक्त्या भेदीन्येव। चरकमुनिमतानुसारिणस्त्वेवमाचक्षते—"तुम्बं रूक्षतरं कालिङ्गैर्वारुचिर्भटं ग्राहीति"। कालिङ्गं कर्चरम्। एर्वारुः कर्कटिका। चिर्भटं डङ्गरं मालवेषु प्रसिद्धमतिप्रसिद्धं जालन्धरादिषु। एतच्च बालमसम्पूर्णरसादि पित्तहरं शीतवीर्यं च। अतो बालाद्विपरीतं पक्वं पित्तकरमुष्णवीर्यं चेत्यर्थः। सुश्रुतेनोक्तम्—"नीलं यत्त्रपुसं बालं त्रप्यं पित्तहरं मतम्। तत्पाण्डुकफकृज्जीर्णमम्लपित्तकरं स्मृतम्"।

**शीर्णवृन्तं तु सक्षारं पित्तलं कफवातजित्।**
**रोचनं दीपनं हृद्यमष्ठीलाऽऽनाहनुल्लघु ॥ ८९ ॥**

शीर्णवृन्तं कर्चरमीषत्क्षारं पित्तलं कफवातघ्नं च। रुचिकरमग्निदीप्तिकृत्। हृद्य-

मष्ठीलाऽऽनाहं च हन्ति लघु च। "घनाष्ठीलोपमो ग्रन्थिरष्ठीलोर्ध्वं समुन्नत" इत्यष्ठीलालक्षणम्। "साटोपमत्युग्ररुजमाध्मानमुदरे भृशम्। ऊर्ध्वाधोवातरोधेन तमानाहं प्रचक्षत" इति।

**मृणालबिसशालूककुमुदोत्पलकन्दकम्।**
**नन्दीमाषककेलूटशृङ्गाटककशेरुकम्॥ ९० ॥**
**क्रौञ्चादनं कलोड्यं च रूक्षं ग्राहि हिमं गुरु।**

मृणालादि रूक्षं संग्रहणं शीतवीर्यं गुरु च। मृणालं द्विविधं सूक्ष्मं स्थूलं च। तत्र सूक्ष्मं मृणालमितरद्बिसम्। शालूकं पद्ममूलम्। कुमुदकन्दम्। कुमुदं शशिप्रियम्। उत्पलकन्दकं रक्तोत्पलकन्दम्। नन्दी तुण्डेरिका। माषको वास्तुलः। केलूटं हिस्मकसंज्ञमुदुम्बरभेदः। शृङ्गाटकं त्रिकोणाकृति जलोद्भवं कन्दम्। कसेरुकं मागधम्। क्रौञ्चादनं तमेदम्। कलोड्यं पद्मबीजम्।

**कलम्बनालिकामार्षकुटिञ्जरकुतुम्बकम्॥ ९१ ॥**
**चिल्लीलट्वाकलोणीकाकुरूटकगवेधुकम्।**
**जीवन्तझुञ्झ्येडगजयवशाकसुवर्चलम्॥ ९२ ॥**
**आलुकानि च सर्वाणि तथा सूप्यानि लक्ष्मणम्।**
**स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु॥ ९३ ॥**
**शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति।**
**स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम्॥ ९४ ॥**

कलम्बादिकं मधुरं किंचिल्लवणं वातश्लेष्मकरं गुरु च शीतवीर्यं मूत्रं पुरीषं च विसृजति बहिः क्षिपति। विष्टभ्योदरप्रदेशे पिण्डीभूय जीर्यति परिणमति। प्रायोग्रहणं किंचिदेषां मध्ये नैवं स्वरूपमिति ज्ञापनार्थम्। कलम्बं कदम्बः। नालिका दीर्घनालरूपा कलम्बुसंज्ञा। मार्षो गन्धारिका। कुटिञ्जरं ताम्रमूलकम्। कुतुम्बको द्रोणपुष्पी। चिल्ली पृथुपत्रं यवशाकं कुमामसंज्ञम्। लट्वाको गुग्गुलुकः। लोणिका लोणारः। कुरूटकः स्थितिवारकः। गवेधुकं तृणधान्यविशेषः। जीवन्तो बृहद्गान्धारम्। झुञ्झुर्झुञ्झुरुकः। एडगजः प्रपुन्नाटः। यवशाकं ह्रस्वपत्रा चिल्ली। सुवर्चला रविभक्ता। आलुकानि च सर्वाणि नानाविधानि रक्तालुकमधुकालुकादिभेदेन। सूप्यानि मुद्गराजमाषादिपत्राणि। लक्ष्मणं मधुयष्टिका। एतच्च सर्वं स्विन्नं निष्पीडितरसमतिबहुस्नेहं च नात्यपथ्यम्। सुश्रुते चोक्तम्—"संस्कृतं वेसवारेण सस्नेहं शाकमिष्यते। राजिकासक्तुभक्तादिसंस्कारं चानुवर्तते"।

**लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता।**

लघुपत्रा या चिल्ली यवशाकविशेषः सा तु वास्तुकसमा गुणैर्मता।

**तर्कारीवरणं स्वादु सतिक्तं कफवातजित्॥ ९५ ॥**



तर्कार्यरणीका। वरणो मालः। समाहारेण तयोर्द्वन्द्वः। एतत्स्वादु किञ्चित्तिक्तं कफवातघ्नं च।

**वर्षाभ्वौ कालशाकं च सक्षारं कटुतिक्तकम्।**
**दीपनं भेदनं हन्ति गरशोफकफानिलान्॥ ६६॥**

वर्षाभ्वौ पुनर्नवे तथा कालशाकं किञ्चित्क्षारं रसे च कटुतिक्तं वह्निदीपनं भेदनं गरादींश्च हरति। कठिल्लो वर्षाभूः स च प्रागुक्तगुणः। तथा च निघण्टुः—"पुनर्नवा विशाखश्च कठिल्लः सासिनाडिका। वृश्चिकः क्षुद्रवर्षाभूर्दीर्घपत्रः कठिल्लकः। पुनर्नवा परः क्षुद्रः सद्यो मण्डलपत्रकः। श्वेतमूलो वर्षकेतुर्मदा वर्षाभूरुच्यत" इति।

**दीपनाः कफवातघ्नाश्चिरिबिल्वाङ्कुराः सराः।**

चिरिबिल्वः पूतिकरञ्जस्तस्याऽङ्कुरा वह्निदीपनाः कफवातघ्नाः सराश्च।

**शतावर्यङ्कुरास्तिक्ता वृष्या दोषत्रयापहाः॥ ६७॥**

शतावर्या अङ्कुराः प्ररोहास्तिक्तरसा वृष्याः शुक्रकृतस्त्रिदोषघ्नाश्च।

**रूक्षो वंशकरीरस्तु विदाही वातपित्तलः।**

वंशकरीरो वंशाङ्कुरो रूक्षो विदाही वातपित्तकृत्।

**पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित्॥ ६८॥**

पत्तूरो दीपनस्तिक्तरसः प्लीहादिजित्। पत्तूरो मत्स्याक्षकः।

**कृमिकासकफोत्क्लेदान् कासमर्दो जयेत्सरः।**

कासमर्दः सरः कृम्यादींश्च नाशयति। उत्क्लेदः स्रोतसां मालिन्येनार्द्रत्वम्।

**रूक्षोष्णमम्लं कौसुम्भं गुरु पित्तकरं सरम्॥ ६६॥**

कुसुम्भशाकं रूक्षमुष्णवीर्यमम्लं गुरु पित्तकृत्सरं च।

**गुरूष्णं सार्षपं बद्धविण्मूत्रं सर्वदोषकृत्।**

सार्षपं शाकं गुरूष्णवीर्यम्। तथा शकृन्मूत्रं च बध्नाति। त्रिदोषकृच्च। संग्रहे तु सक्षारत्वमस्योक्तम्। तत्पाठो हि—"सक्षारमधुरं स्निग्धमुष्णं च गुरु सार्षपमिति"। सुश्रुतेन चोक्तम्—"कफघ्नं सार्षपं शाकमासुरं शाकमेव चेति"।

**यद्बालमव्यक्तरसं किञ्चित्क्षारं सतिक्तकम्॥ १००॥**
**तन्मूलकं दोषहरं लघु सोष्णं नियच्छति।**
**गुल्मकासक्षयश्वासव्रणनेत्रगलामयान्॥ १०१॥**
**स्वराग्निसादोदावर्तपीनसांश्च**

यन्मूलकमव्यक्तरसमस्फुटस्वादं तथा किंचित्क्षारमीषत्क्षारगुणयुक्तं कार्यतोऽनुमीयमानं तथा सतिक्तमीषत्तिक्तकं रसनेन्द्रियस्य किंचिदुद्वेजकं तन्मूलकं दोषाणां हरं दोषहरं नान्यावस्थम्। बालं मूलकं दोषहरमित्यनेनास्य विशिष्य बालावस्था दोषहरत्वेन नियम्यते। न सर्वं बालावस्थं दोषहरमपि त्वीदृग्रूपमित्यर्थः। अन्ये तु

दोषहरमित्यत्र समासं कृत्वा वातश्लेष्मघ्नत्वमेवास्य प्रतिजानते । यतः किंचिदुष्ण-वीर्यत्वात्पित्तकरत्वमस्यास्त्येव । किंचित्तिक्तरसोपेतत्वेन पित्तकर्तृत्वमस्य व्याहर्तुं न युक्तम् । वक्ष्यति हि--"रसं विपाकस्तौ वीर्यं प्रभावस्तान्व्यपोहतीति" । एवं चैतन्मूलकं वातश्लेष्मघ्नमेव युक्तं न तु पित्तहृच्चेति तेषामभिप्रायः । एतच्च मूलकं गुल्मादीन्नियच्छति । पीनसांश्चेति चशब्दः समुच्चये । अन्यानप्येवं प्रायशो रोगा-न्नियच्छतीति । सुश्रुतस्तु--"सर्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिकेति" । यद्भे-दान्तरं ब्रूते तदप्यत्रैव बालमूलकलक्षणेऽन्तर्भूतमिति तन्त्रकृतेह पृथङ् नोक्तम् ।

महत्पुन. ।

**रसे पाके च कटुकमुष्णवीर्यं त्रिदोषकृत् ॥ १०२ ॥**

**गुर्वभिष्यन्दि च**

अव्यक्तरसादिलक्षणावस्थां विहाय यावद्व्यक्तरसाद्यवस्थं तत्सम्पद्यते ततोऽनन्तरं क्रमेण रसविपाकयोः कटुकमुष्णवीर्यं तन्मूलकं महद्वृद्धं त्रिदोषकृद् गुर्वभिष्यन्दि च भवति । वृद्धस्य च मूलकस्यानेका अवस्थाः सम्भवन्ति । तत्र चास्याद्याऽवस्थायां किंचित्त्रिदोषकृत्त्वमन्त्याऽवस्थायामतिशयेन त्रिदोषकृत्त्वं वेद्यम् । सङ्ग्रहे त्वस्य स्वादुविपाकित्वमुक्तम् । तत्पाठे महत्पुनः--"रूक्षोष्णङ्कटुकं स्वादु विपाके सर्वदोष-कृदिति" । तच्चामविषयम् ।

**स्निग्धस्विन्नं तदपि वातजित् ।**

अपिशब्द एवार्थे । तदेव महन्मूलकं स्निग्धस्विन्नं वातजित् । स्निग्धं च तत् स्विन्नं च स्निग्धस्विन्नम् । न त्वस्निग्धस्विन्नमात्रमित्यर्थः ।

**वातश्लेष्महरं शुष्कं सर्वम्**

सर्वं बालं वृद्धं च मूलकं शुष्कं सद्वातश्लेष्महरम् ।

**आमं तु दोषलम् ॥ १०३ ॥**

आमं तु पुनर्मूलकं हरीतकत्वेन यद्वक्ष्यते तद्दोषलम् । सर्वमित्यत्रायत्नकृतेन सम्बन्धेन सम्बध्यते । तेनादोषलस्य बालस्याऽप्यामस्य दोषलत्वं न तु वृद्धस्यैवे-त्यर्थः । मूलकं नीलकण्ठापरसंज्ञम् ।

**कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः ।**

पिण्डालुः कटुको रसे वीर्ये चोष्णो वातकफघ्नः पित्तकरश्च ।

**कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणम् ॥ १०४ ॥**

**फणिज्झार्जकजम्बीरप्रभृति ग्राहि शालनम् ।**

**विदाहि कटु रूक्षोष्णं हृद्यं दीपनरोचनम् ॥ १०५ ॥**

**दृक्शुक्रकृमिहृत्तीक्ष्णं दोषोत्क्लेशकरं लघु ।**

कुठेरादि शालनं ग्राहि विदाहि कटुकं रसपाकयो रूक्षमुष्णवीर्यं हृद्यमग्निदी-पनं च । तथा दृगादिहृत्तीक्ष्णम् । तथा दोषान्वातादीनुत्क्लेशयति कोपयति स्था-

नाचालयति दोषोत्क्लेशकरं,लघु च। शालनमवदंशो येन सहान्नं भोक्तुं युज्यते। कुठेरो वैकुण्ठः। शिग्रुः फलपत्रकः। सुरसः कृष्णतुलसी। सुमुखः कटुपत्रकः। आसुरी राजिका। भूस्तृणं गुह्यबीजकम्। "फणिज्जको मरिचकस्तीक्ष्णगन्धः प्रकीर्तितः"। आर्जकः खरपत्रकः। जम्बीरः करपत्रकः। प्रभृतिशब्देन सङ्ग्रहोक्ता गृह्यन्ते। "धान्यतुम्बरुसालेययवानीश्वङ्गबेरकाः। पर्णाशो गृञ्जनोऽजाजी करण्डीरं जलपिप्पली। फणिज्जार्जकजम्बीरं खराश्वा कालमालिका। दीप्यकः क्षवकद्रद्वीपिबस्तगन्धादिवद्धविडिति"। तत्रान्तरे चोक्तम्—"कटुतिक्तरसा शीता कफपित्तविनाशिनी। विपाके मधुरा लघ्वी तस्कराङ्गुलिका स्मृतेति"।

**हिध्मकासश्रमश्वासपार्श्वरुक्पूतिगन्धहा ॥ १०६ ॥**

**सुरसः**

सुरसो हिध्मादिघ्नः पूतिगन्धं दौर्गन्ध्यं सौरभ्योत्पादनाद्धन्ति।

**सुमुखो नातिविदाही गरशोफहा।**

सुमुखः कटुपत्राख्यः किञ्चिद्विदाही गरशोफौ च हन्ति।

**आर्द्रिका तिक्तमधुरा मूत्रला न च पित्तकृत् ॥ १०७ ॥**

आर्द्रिकाऽऽर्द्रधानिका तिक्तमधुरा मूत्रकरी पित्तं च न करोति।

**लशुनो भृशतीक्ष्णोष्णः कटुपाकरसः सरः।**
**हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः ॥ १०८ ॥**
**किलासकुष्ठगुल्माऽर्शोमेहक्रिमिकफाऽनिलान्।**
**सहिध्मपीनसश्वासकासान् हन्त्यस्रपित्तकृत् ॥ १०९ ॥**

लशुनोऽतितीक्ष्णोऽत्युष्णवीर्यः। कटुपाकरसः सरो भेदी हृद्यादिगुणयुक्तश्च किलासादीन् हन्ति रक्तपित्तं च करोति। किलासं श्वित्रम्। कन्दस्यैवायं गुणवीर्यनिर्देशो बोध्यः। पत्रमध्ययोर्मधुरत्वाद् भृशोष्णत्वानुपपत्तिः। तथा चोक्तं सङ्ग्रहे—"पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिलः। तीक्ष्णोष्णो लशुनः कन्द" इति।

**पलाण्डुस्तद्गुणन्यूनः श्लेष्मलो नाऽतिपित्तलः।**
**कफवातार्शसां पथ्यः स्वेदेऽभ्यवहृतौ तथा ॥ ११० ॥**

पलाण्डुर्धवलाक्षकाख्यस्तद्गुणन्यूनस्तस्य रसोनस्य गुणास्तद्गुणास्तैर्हीनः। लशुनात्किंचिद्धीनगुण इत्यर्थः। तथा श्लेष्मलो नातिपित्तं च करोति। नतु लशुनवत्कफघ्नोऽतिपित्तकृच्च। कफवातार्शसां स्वेदे भक्षणे च प्रभावात्पथ्यः। तन्त्रान्तरेऽन्योऽप्युक्तो यथा—"स्निग्धो रुचिष्यः स्थिरधातुकारी बल्योऽथ मेधाकफपुष्टिदश्च। स्वादुर्गुरुः शोणितपित्तशस्तः सपिच्छिलः क्षीरपलाण्डुरुक्त" इति।

**तीक्ष्णो गृञ्जनको ग्राही पित्तिनां हितकृन्न सः।**

गृञ्जनकस्तीक्ष्णो ग्राही पित्तिनामहितश्च।

**दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः ॥ १११ ॥**



**विशेषादर्शसां पथ्यः**

सूरणो नाम कन्दविशेषो दीपनो रुच्यः श्लेष्मघ्नो विशदो लघुरर्शसामतिपथ्यश्च।

**भूकन्दस्त्वतिदोषलः ।**

भूकन्दः स्फोटाख्यः प्रावृडुद्भवः प्रसिद्ध एव । स चात्यर्थं दोषलः ।

**पत्रे पुष्पे फले नाले कन्दे च गुरुता क्रमात् ॥ ११२ ॥**

पत्रादीनां यथोत्तरं क्रमाद्गुरुत्वम् । तेन पत्रशाकमपेक्ष्य पुष्पशाकं गुरु ततः फलशाकं ततो नालशाकं ततोऽपि कन्दशाकमिति । एवं हारीतकेष्वपि गुरुत्वं वेद्यम् । बाहुल्येन चैतदुक्तम् । मूलके हि वैपरीत्यं दृश्यते । तथा हि । मूलकस्य हि कन्दे लघुत्वम् । अत एव मुनिरप्याह—"मूलके तु विपर्यय" इति । शाकानां हारीतकानां च येषामिह पर्याया नोक्तास्तेषां सद्वैद्येभ्योऽवगन्तव्याः ।

अथ वराऽवरत्वं निर्धारयति—

**वरा शाकेषु जीवन्ती सर्षपास्त्ववराः परम् ।**

शाकेषु मध्ये जीवन्ती वरा । सर्षपाः पुनरवराः । इति शाकवर्गः ।

अथ फलवर्गः—

फलानामाहारकाले शाकेभ्योऽल्पोपयोगित्वाच्छाकवर्गादनन्तरं फलवर्ग उच्यते। खरनादेऽप्युक्तम्—"भुक्तावसाने फलं भुज्यत" इति फलवर्गोऽभिधीयत इत्याह ।

**द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविद् ॥ ११३ ॥**
**स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः ।**
**निहन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान् ॥ ११४ ॥**
**तृष्णाकासश्रमश्वासस्वरभेदक्षतक्षयान् ।**

फलेषूत्तमा फलोत्तमा गोस्तनीपर्याया द्राक्षा सा वृष्यादिगुणयुक्ता । सकषाया ईषत्कषाया । अनिलादीन्क्षयान्तान् हन्ति । उदावर्तहरत्वं चरकमुनिनाऽस्या उक्तं तच्च स्निग्धत्ववृष्यत्वसृष्टविएमूत्रत्वेनेहोक्तप्रायम् । अभ्यासाच्च द्राक्षाणां गुणहीनत्वं देशाद्यनुरोधात्कल्प्यम् ।

**उद्रिक्तपित्तान् जयति त्रीन् दोषान् स्वादु दाडिमम् ॥११५॥**
**पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् ।**
**सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ॥ ११६ ॥**

उद्रिक्तमतिरिक्तं पित्तं येषां तांस्तथाविधान् त्रीन् दोषान् मधुरं दाडिमं जयति । मधुरस्य पूर्वकथनं प्राधान्यख्यापनार्थम् । पित्तेत्यादि । अम्लं दाडिमं पित्ताविरोधि न पित्तं कुरुते न च पित्तं शमयति । अत एवैतद्वातकफापहमुक्तम् । सर्वं मधुरमम्लं च यद्दाडिमं तद् हृद्यादिगुणसंयुक्तम् । मुनिना तूक्तम्—"रूक्षाम्लं दाडिमं यत्तु तत्पित्तानिलकोपनमिति" ।

**मोचखर्जूरपनसनालिकेरपरूषकम् ।**



**आम्राततालकाश्मर्यराजादनमधूकजम् ॥ ११७ ॥**
**सौवीरबदराङ्कोल्लफल्गुश्लेष्मातकोद्भवम्।**
**वातामाभिषुकाक्षोडमुकूलकनिकोचकम् ॥ ११८ ॥**
**उरुमाणं प्रियालं च बृंहणं गुरु शीतलम्।**
**दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ॥ ११९ ॥**
**स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत्।**

मोचादिप्रियालान्तं बृंहणत्वादियुक्तम्। मोचं कदलीफलम्। नालिकेरं राजफलाख्यम्। परूषको मृदुफलः। आम्रातः कपिचूडः। तालं तालफलम्। काश्मर्यं काश्मरीफलम्। राजादनं क्षीरशुक्लम्। सौवीरबदरं कर्णिकाबदरम्। अङ्कोल्ल इति त्रिल्वः। फल्गुः काकोदुम्बरिका। श्लेष्मातकं शेलुः। अभिषुकं स्याराटम्। आक्षोडं स्नेहफलाख्यम्। मुकूलकं दन्तीफलम्। निकोचकं सरलफलम्। उरुमाणं स्निग्धफलम्। प्रियालं प्रियालकफलम्।

**फलं तु पित्तलं तालं सरं काश्मर्यजं हिमम् ॥ १२० ॥**
**शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम्।**
**वातामाद्युष्णवीर्यं तु कफपित्तकरं सरम् ॥ १२१ ॥**
**परं वातहरं स्निग्धमनुष्णं तु प्रियालजम्।**
**प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥ १२२ ॥**
**कोलमज्जा गुणैस्तद्वत्तृट्छर्दिकासजिच्च सः।**

तालस्येदं तालं फलं पित्तकारि। काश्मर्यजं फलं सरं शीतवीर्यादिगुणयुक्तम्। मधूकबदरयोरपि विशेषान्तरमुक्तं सङ्ग्रहे। "मधूकजमहृद्यं तु बदरं सरणात्मकमिति"। वातामादीनां ग्रहणं गुणविशेषप्रदर्शनार्थम्। निर्धारिते तु विशेषे वातामादिकमुष्णवीर्यं कफपित्तकरं सरमतिशयेन वातघ्नं स्निग्धं च। आदिशब्देनाऽभिषुकादीनां ग्रहणम्। प्रियालजातं प्रियालजं फलमनुष्णवीर्यम्। तुर्विशेषे। विशेषस्तु शीतवीर्यत्वमेव। शेषं बृंहणादि सर्वं समानम्। प्रियालमज्जाऽस्थ्यभ्यन्तरं मधुरादिगुणयुक्तम्, बदरमज्जा गुणैस्तद्वत् प्रियालमज्जावत्तृडादिजिच्च। तन्त्रान्तरे चोक्तम्—"बैभीतको मदकरः कोलानां पितनाशनः"। "तथा तालखर्जूरादीनां मस्तकमज्जानः स्वादुपाका वृष्याः शीतवीर्याश्चेति" सुश्रुतोऽपठत्।

**पक्वं सुदुर्जरं बिल्वं दोषलं पूतिमारुतम् ॥ १२३ ॥**
**दीपनं कफवातघ्नं बालं ग्राह्युभयं हि तत्।**

बिल्वं पक्वं सुदुर्जरं पूतिमारुतं च दुर्गन्ध्यपानवातकृद्भवति। बालमसम्पूर्णमनुपचितं बिल्वं दीपनं कफवातघ्नम्। उभयमामं पक्वं च ग्राहि मूत्रपुरीषादेः सङ्ग्रहणम्।

---

मा०टि० १ अङ्कोल्लः=अङ्कोठः। २ पिस्ता। ३ न्योजे। ४ चिलगोजे भेदः। ५ चिलगोजे।

**कपित्थमामं कण्ठघ्नं दोषलं दोषघाति तु ॥ १२४ ॥**
**पक्वं हिध्मावमथुजित्सर्वं ग्राहि विषापहम् ।**

आमं कपित्थं कण्ठं हन्ति। दोषलं त्रिदोषकृत्। पक्वं कपित्थं दोषघ्नं हिक्काच्छर्दिहरम्। सर्वमामं पक्वं च कपित्थं ग्राहि विषापहं च। आमकपित्थस्य कषायत्वं कण्ठघ्नत्वेनैवोदितम्। अम्लत्वं चाम्लवर्गमध्ये पाठादवगन्तव्यम्। पक्वस्य च मधुरत्वं सुप्रसिद्धमितीहैतन्नोक्तम्। तथा आमकपित्थगुणकथनेन तथाविधानि कषायाम्लस्वभावानि विविधानि कपित्थानि सदैवामकपित्थगुणानि वेद्यानि, पक्वकपित्थगुणकथनेन च तथाविधानि माधुर्यानुविद्धानि सदा पक्वगुणानि वेद्यानि।

**जाम्बवं गुरु विष्टम्भि शीतलं भृशवातलम् ॥ १२५ ॥**
**सङ्ग्राहि मूत्रशकृतोरकण्ठ्यं कफपित्तनुत् ।**

जांबवं गुर्वादिगुणयुक्तं मूत्रशकृतोश्च सङ्ग्रहणं कण्ठाय च हितं न। कफपित्तजिच्च। जाम्बवमिति फलार्थे जम्ब्वा वेत्यण्।

आम्रस्य त्र्यवस्थस्याऽप्युपयोगदर्शनात्तथैव गुणानाह—

**वातपित्तास्रकृद्बालं बद्धास्थि कफपित्तकृत् ॥ १२६ ॥**
**गुर्वाम्रं वातजित्पक्वं स्वाद्वम्लं कफशुक्रकृत् ।**

वातेत्यादि। आम्रमिति वक्ष्यमाणेन सम्बन्धः। आम्रं चूताख्यं बालं सद्वातपित्तास्रकृत्। बद्धास्थि सञ्जातास्थि कफपित्तकृत्। पक्वमाम्रं गुरु वातजित्। मधुराम्लं कफशुक्रकृत्। सङ्ग्रहे सहकारस्य गुणा उक्ताः। यथा—"सहकाररसो हृद्यः सुरभिः स्निग्धरोचन इति"।

**वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्महरं लघु ॥ १२७ ॥**

वृक्षाम्लं ग्राह्यादिगुणैर्युक्तम्। वातश्लेष्महृल्लघु च। कोशाम्रं च किञ्चिदेतस्मान्न्यूनगुणं ज्ञेयम्। तथा च सङ्ग्रहे—"वृक्षाम्लं ग्राहि रूक्षोष्णं लघु रोचनदीपनम्। वातश्लेष्महरं किंचिदूनं कोशाम्रजं तत इति"।

**शम्या गुरूष्णं केशघ्नं रूक्षं, पीलु तु पित्तलम् ।**
**कफवातहरं भेदि प्लीहार्शःकृमिगुल्मनुत् ॥ १२८ ॥**
**सतिक्तं स्वादु यत्पीलु नात्युष्णं तत्त्रिदोषजित् ।**

फलापेक्षया षष्ठी। शम्याः फलं गुरु उष्णवीर्यं केशघ्नं रूक्षं च। पीलुफलं च पित्तलं यावद्गुल्मनुत्। सतिक्तमीषत्तिक्तं मधुरं च यत्पीलु तन्नात्युष्णं त्रिदोषजिच्च।

मातुलुङ्गस्य त्वङ्मांसकेसराणां पृथगुपयोगदर्शनात्पृथगेव गुणानाह—

**त्वक्तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित् ॥ १२९ ॥**
**बृंहणं मधुरं मांसं वातपित्तहरं गुरु ।**
**लघु तत्केसरं कासश्वासहिध्ममदात्ययान् ॥ १३० ॥**
**आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ।**

**गुल्मोदरार्शःशूलानि मन्दाग्नित्वं च नाशयेत्॥ १३१॥**

बीजपूरकस्य त्वक्तिक्ता कटुका रसे स्निग्धा वातघ्नी च। चरकेऽप्युक्तम्-"गुर्वी त्वगस्य कटुका मारुतस्य च नाशनीति"। खरनादस्त्वाह—"त्वङ्मातुलुङ्गात्कटुका गुर्वी वातप्रकोपनीति"। एतन्मतानुसारिणस्त्वत्रैवं पाठं पठन्ति। त्वक्तिक्तकटुकाऽस्निग्धा मातुलुङ्गस्य वातकृदित्यकारप्रश्लेषात्। मांसं केसरादर्वाग्बृंहणं मधुरं वातपित्तहृद् गुरु च। तस्य मातुलुङ्गस्य केसरं तत्केसरं लघु। तथा कासादीन्मन्दाग्नित्वान्तान्नाशयेत्।

**भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम्।**
**तदस्थ्यग्निसमं मेध्यं कफवातहरं परम्॥ १३२॥**

त्वक् च मांसं च त्वङ्मांसं भल्लातकसम्बन्धि बृंहणं मधुरं शीतलं च। तस्य भल्लातकस्यास्थि तदस्थि, अग्निसमं तीक्ष्णत्वादग्निवत्स्फोटककर्तृत्वात्। अथवाऽग्निश्चित्रस्तस्य गुणदोषकर्तृतया तुल्यं भल्लातकास्थीति। तथा मेधार्थे हितमिति। कफवातघ्नम्।

**स्वाद्वम्लं शीतमुष्णं च द्विधा पालेवतं गुरु।**
**रुच्यमत्यग्निशमनं रुच्यं मधुरमारुकम्॥ १३३॥**

पालेवतं रैवतकाख्यं द्विधा। कथं द्विप्रकारमित्याह। स्वाद्वम्लं च। तत्तु यथासङ्ख्येन शीतमुष्णं च। तथा द्वयमपि गुरु रुच्यमत्यग्निशमनं च। अथवा यथासम्भवं सम्बन्धो मधुरं गुर्वत्यग्निनाशनं च। अम्लं रुच्यमिति। मधुरमारुकं रुच्यं हृद्यं भवति।

अपक्वस्यैवैते गुणा वेद्याः। यस्मादाह—

**पक्वमाशुजरां याति नात्युष्णं गुरु दोषलम्।**

पक्वं च द्रागेव परिणामं याति। किञ्चिदुष्णवीर्य्यं किञ्चिद्गुरु किञ्चिद्दोषलमपथ्यम्। निघण्टावुक्तम्-"आरुकं वीरसेनं च वीरावीरारुकं तथा। विद्याज्जातिविशेषेण तच्चतुर्विधमारुकम्"।

**द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम्॥ १३४॥**
**गुरूष्णवीर्यं वातघ्नं सरं च करमर्दकम्।**

द्राक्षा परूषकं करमर्दकं चार्द्रमशुष्कमपक्वमम्लं सपित्तश्लेष्मकरं गुरूष्णवीर्यं वातघ्नं सरं चेति। करमर्दकं सुषेणमम्लम्।

**तथाऽम्लं कोलकर्कन्धूलकुचाम्रातमारुकम्॥ १३५॥**
**ऐरावतं दन्तशठं सतूदं मृगलिण्डिकम्।**
**नातिपित्तकरं पक्वं शुष्कं च करमर्दकम्॥ १३६॥**

कोलादिकं मृगलिण्डिकान्तं तथा तद्वच्चेत्यम्लद्राक्षादिवद्गुणैर्ज्ञेयमित्यर्थः। कर्कन्धूर्ह्रस्वबदरी। लकुचं लिकुचम्। आरुकस्याम्लकस्यैवैते गुणा ज्ञेयाः। मधु-

रस्य हि विशेषण पूर्वमुक्ता एव गुणाः। तथैरावतादि नात्युष्णं पित्तं करोति। ऐरावतं नागरङ्गम्। दन्तशठं जम्बीरम्। तथा सतूदं मृगलिण्डिकं च। तथा करमर्दकं पक्वं शुष्कं च नात्यर्थपित्तकरम्।

**दीपनं भेदनं शुष्कमम्लीकाकोलयोः फलम्।**
**तृष्णाश्रमक्लमच्छेदि लघ्विष्टं कफवातयोः॥ १३७॥**

अम्लीकाफलं कोलफलं च शुष्कं सद्दीपनं भेदनं तृष्णादिनाशनं लघु कफवातयोश्च पथ्यम्।

**फलानामवरं तत्र लकुचं सर्वदोषकृत्।**

फलानां सर्वेषां मध्ये लकुचमप्रधानं त्रिदोषकरम्। चरकमुनिस्त्वस्य पित्तश्लेष्मकृत्त्वमेवानुजज्ञे। तत्पाठे—"लकुचं श्लेष्मपित्तकृत्। वातलं कफपित्तघ्नं विद्यात्पर्पटकीफलम्। मधुराण्यतिपाकीनि वातपित्तहराणि च। अश्वत्थोदुम्बरप्लक्षन्यग्रोधानां फलानि तु। प्राचीनामलकं चैव दोषघ्नं गरहारि च। इङ्गुदं तिक्तमधुरं स्निग्धोष्णं कफवातजित्"। सुश्रुतेनोक्तम्—"सुगन्धि मधुरं स्निग्धं लवलीफलमुच्यते। वृक्षाम्लाल्पान्तरगुणं कोशाम्रफलमुच्यत इति।"

सम्प्रति यादृशं फलं शाकं च सम्पाद्यं तदुपदिशन्नाह।

**हिमानिलोष्णदुर्वातव्याललालादिदूषितम्॥ १३८॥**
**जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम्।**
**अन्यधान्ययुतं हीनवीर्यं जीर्णतयाऽपि च॥ १३९॥**
**धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम्।**
**असञ्जातरसं तद्वच्छुष्कं चान्यत्र मूलकात्॥ १४०॥**
**प्रायेण फलमप्येवं तथामं बिल्ववर्जितम्।**

दूषितशब्दः प्रत्येकं सम्बध्यते। धान्यं केदारस्थं हिमेन दूषितं त्यजेत्। तथाऽनिलेन प्रवृद्धेन दूषितं तथा उष्णेनातपादिना दुर्वातेन पुरोवातादिना तथा व्यालानां सर्पादीनां लालया दूषितं त्यजेत्। आदिग्रहणेन शवकोथमूत्रपुरीषादीनां ग्रहणम्। तथा जन्तुभिः कृम्यादिभिर्जुष्टं सेवितम्। जले मग्नमाशिखं बुडितम्। अभूमौ विपरीतभुवि जातमभूमिजम्, या यस्योचिता भूमिस्ततोन्या विपरीता। अनार्तवमप्राप्तसमयम्। यस्मिन्नृतौ यस्योत्पत्तिः प्रसिद्धा ततोऽन्यस्मिन् जातमित्यर्थः। तल्लक्षणं रसादीनामपरिपूर्णत्वेन विज्ञेयम्। अन्येन च विजातीयेन धान्येन संयुतम्। यथा रक्तशालिर्यवकेन सह विरुध्यते। तथा मुद्गो माषेण। एवं शूकधान्यं विजातीयेन शूकधान्येन। तथा शिम्बीधान्यं शिम्बीधान्येन विजातीयेन सह विरुद्धं त्यजेत्। केचिच्छूकधान्येन सह विरुद्धमिति वर्णयन्ति। अन्ये तु जीर्णं नवेन मिश्रितमन्यधान्ययुतमिति ब्रुवते। केदारगतं जीर्णतयाऽतिपुराणत्वेन हीनवीर्यं नष्टशक्ति। एवंविधं धान्यं त्यजेत्। तथा शाकमपि त्यजेत्।

कीदृशम्? रूक्षसिद्धं निःस्नेहसिद्धमित्यर्थः। अथवा रूक्षेण काञ्जिकादिना सिद्धं रूक्षसिद्धम्। अकोमलं जठरेऽसञ्जातरसमपरिपूर्णरसस्वरूपमित्यर्थः। तद्वच्छुष्कं तथैव शुष्कशाकमप्यसञ्जातरसं त्यजेत्। अन्यत्र मूलकात् शुष्कमूलकं भजेदेव। प्रायेण फलमप्येवंविधं त्यजेत्। प्रायोग्रहणं द्राक्षापरूषकादीनां शुष्काणामपि पथ्यत्वादत्याज्यत्वज्ञापनार्थम्। तथा आममसम्प्राप्तपाकं फलं त्यजेदिति वर्तते। किं सर्वं नेत्याह। बिल्ववर्जितम्। बिल्वं त्वाममपि पथ्यत्वान्न त्यजेदेवेत्यर्थः। इति फलवर्गः।

अथ लवणादिवर्गः–

फलवर्गादनन्तरं विविधौषधवर्गारम्भः। प्रायेणास्याहारोपयोगित्वात्तत्राऽपि लवणानां पूर्वमुपन्यासो युक्तः सुतरामुपयोगित्वादित्याह।

**विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः॥ १४१॥**
**वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत्।**

सर्वं लवणं विष्यन्द्यादिगुणयुक्तं विदुर्जानन्ति सद्वैद्या इति शेषः। विष्यन्दयति तच्छीलं विष्यन्दि। स्त्यानस्य कफादिसङ्घातस्य विलीनविग्रहतामुत्पादयतीत्यर्थः। सूक्ष्मं सूक्ष्मस्रोतोगामि। सृष्टं मलं मूत्रपुरीषादि येन तत्सृष्टमलम्। तथा वातापहम्। पाकि अन्नव्रणादीनां पाककारि। तीक्ष्णममृदु मरीचादिवत्। उष्णमुष्णवीर्यम्। रोचनं रुचिकृत्। तथा कफपित्तकृत्।

इति सामान्यलक्षणमुक्त्वा विशेषमाह।

**सैन्धवं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषनुत्॥ १४२॥**
**लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम्।**

तत्र तेषु लवणेषु मध्ये सैन्धवं सस्वादु ईषन्मधुरं वृष्यं हृद्यं त्रिदोषघ्नं तथा किञ्चिदुष्णं दृष्टेः पथ्यं किञ्चिद्विदाह्यग्निदीपनं च। सामान्यगुणाश्च विष्यन्दिसूक्ष्मसृष्टमलत्वरोचनान्यस्य सन्त्येव।

**लघु सौवर्चलं हृद्यं सुगन्ध्युद्गारशोधनम्॥ १४३॥**
**कटुपाकं विबन्धघ्नं दीपनीयं रुचिप्रदम्।**

सौवर्चलं लघु हृदयाय हितं सुगन्ध्युद्गारं शोधयति दुष्टं सच्छुद्धं करोति। कटुपाकं च। तथा विबद्धस्रोतसां हितं विबन्धघ्नम्। अग्निदीप्तिरुचिकृत्।

**ऊर्ध्वाधःकफवातानुलोमनं दीपनं विडम्॥ १४४॥**
**विबन्धानाहविष्टम्भशूलगौरवनाशनम्।**

बिडं तदूर्ध्वमधश्च कफवातादीननुलोमयति। तथा दीपनं विबन्धादिघ्नं च।

**विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्धनम्॥ १४५॥**

सामुद्रं विपाके मधुरं गुरु कफवर्धनं च।

**सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम्।**

भूमिमुद्भिद्य यद्भवति तदौद्भिदमीषत्तिक्तं कटु क्षारं तीक्ष्णमुत्क्लेदि च दोषोत्क्लिष्टकरम्।

**कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिताः॥ १४६ ॥**

कृष्णे लवणे सौवर्चलगुणा लघुत्वादयो गन्धेन वार्जिताः सौगन्ध्यरहितास्ते सन्ति इति शेषः ।

**रोमकं लघु पांसूत्थं सक्षारं श्लेष्मलं गुरु ।**

रोमकं लवणं लघु पांसूत्थं शिरालवणमिषत् क्षारं श्लेष्मलं गुरु च ।

**लवणानां प्रयोगे तु सैन्धवादीन् प्रयोजयेत् ॥ १४७ ॥**

लवणानां प्रयोगे सैन्धवमादि कृत्वा प्रयोजयेत् । अन्यत्र प्रदेशे लवणानि द्वित्राणि त्रिचतुराण्येव यत्र युज्यन्ते तत्र सैन्धवमादि कृत्वा प्रयोज्यानि । यथा हिंग्वादिचूर्णे द्विपटु इत्युक्तम् । तत्र सैन्धवसौवर्चले प्रयोज्ये । यत्र त्रयाणां प्रयोगस्तत्र सैन्धवसौवर्चलबिडानि । एवमौद्भिदादीनां लवणवर्गे पठितानामन्यत्राऽपि वेद्यम् । खरनादे चोक्तम्--"सैन्धवं सारकं पाक्यं सौवर्चलमथौद्भिदम् । पूर्वं पूर्वं गुणौत्कृष्ट्यमौष्ण्यं चैषां यथोत्तरमिति" ।

**गुल्महृद्ग्रहणीपाण्डुप्लीहानाहगलामयान् ।**
**श्वासार्शःकफकासांश्च शमयेद्यवशूकजः ॥ १४८ ॥**

यवशूकजो यवक्षारो गुल्मादीन् शमयति ।

सम्प्रति स्वर्जिकाक्षारादीनामपि गुणानाह ।

**क्षारः सर्वश्च परमं तीक्ष्णोष्ण कृमिजिल्लघुः ।**
**पित्तासृग्दूषणः पाकी छेद्यहृद्यो विदारणः ॥ १४९ ॥**
**अपथ्यः कटुलावण्याच्छुक्रौजःकेशचक्षुषाम् ।**

क्षारः सर्वश्च परममतिशयेन तीक्ष्णोष्णः कृमिजिल्लघुश्च । पित्तासृजी दूषयति । पाकी पाककारी । छेदी मेदःश्लेष्मादिग्रन्थिघ्नः । अहृद्यो हृदयाय न हितः । विदारणः पक्वगण्डादीनाम् । कटुलावण्याच्छुक्रादीनामपथ्यः ।

**हिङ्गु वातकफानाहशूलघ्नं पित्तकोपनम्॥ १५० ॥**
**कटुपाकरसं रुच्यं दीपनं पाचनं लघु ।**

हिङ्गु वातादिघ्नं पित्तकोपनं कट्वादिगुणयुक्तं च ।

**कषाया मधुरा पाके रूक्षा विलवणा लघुः ॥ १५१ ॥**
**दीपनी पाचनी मेध्या वयसः स्थापनी परा ।**
**उष्णवीर्या सराऽऽयुष्या बुद्धीन्द्रियबलप्रदा ॥ १५२ ॥**
**कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान् ।**
**शिरोऽक्षिपाण्डुहृद्रोगकामलाग्रहणीगदान् ॥ १५३ ॥**
**सशोषशोफातीसारमेदोमोहवमिक्रिमीन् ।**
**श्वासकासप्रसेकार्शःप्लीहानाहगरोदरम् ॥ १५४ ॥**
**विबन्धं स्रोतसां गुल्ममूरुस्तम्भमरोचकम् ।**



**हरीतकी जयेद्व्याधींस्तांस्तांश्च कफवातजान् ॥ १५५ ॥**

हरीतकी कषाया कषायरसा । कषायरसत्वात्कटुविपाकित्वं प्राप्तमित्याह । मधुरा पाक इति । तथा रूक्षा । विलवणेति वचनं लवणं वर्जयित्वा शेषाः पञ्च-रसा अस्याः सन्तीति वेदयति । नन्वेवं कषायेत्यनर्थकं यतः पञ्चसु रसेषु लवण-हीनेषु मध्ये कषायोऽनुप्रविष्ट एव । अस्त्येवैतत् । कषायेत्येतदतिशयख्यापनाय । कषायो रसोऽस्यां बाहुल्येनाऽस्तीत्यर्थः । तथा च मुनिः—" हरीतकीं पञ्चरसा-मुष्णां विलवणां शिवामिति " । तथा लघुः । दीपन्यग्नेः । पाचन्यामादेः । मेध्या मेधायै हिता । वयस इत्यादि । कालकृता शरीरावस्था यौवनादिर्वयस्तस्य परम-तिशयेन स्थापनी स्थिरीकरणी । उष्णेत्येतावतैवोष्णवीर्येत्यस्याऽर्थस्य लब्धत्वाद्वीर्य-ग्रहणमतिशयोष्णवीर्यत्वख्यापनार्थम् । सरा भेदनी । तथाऽऽयुषे हिता । बुद्धिः वर्तमानार्थग्राहिणी प्रज्ञा । इन्द्रियाणि चक्षुरादीनि तेषां बलं प्रददाति या सैवम् । कुष्ठादीन् रोगान् जयति । खरनादे त्वेवमभ्यधायि—" स्वाद्वम्लभावात्पवनं कटु-तिक्ततया कफम् । कषायमधुरत्वाच्च हन्ति पित्तं हरीतकी" ।

**तद्वदामलकं शीतमम्लं पित्तकफापहम् ।**

तया हरीतक्या तुल्यं वर्तत इति तृतीयान्ताद्वतिः । हरीतकीसमानगुणमाम-लकमित्यर्थः । विशेषं त्वस्याह । अभयोष्णेदं शीतं शीतवीर्यं तथाऽम्लमम्लरसं पित्तकफघ्नं चेति । कृष्णात्रेयस्त्वामलकं त्रिदोषघ्नं चाख्यत् । यथा–"अम्लभावा-ज्जयेद्वातं पित्तं माधुर्यशैत्यतः । कफं रूक्षकषायत्वादेवमेष त्रिदोषनुत्" । सुश्रुतेऽपि त्रिदोषघ्नमुक्तम् । तद्ग्रन्थो हि—" चक्षुष्यं सर्वदोषघ्नं वृष्यमामलकीफलम् । हन्ति वातं तदम्लत्वात्पित्तं माधुर्यशैत्यतः । कफं रूक्षकषायत्वात्फलेभ्योऽभ्यधिकं तु तदिति " ।

**कटु पाके हिमं केश्यमक्षमीषच्च तद्गुणम् ॥ १५६ ॥**

अक्षं बिभीतकं पाके कटुकं शीतवीर्यं केशेभ्यो हितम् । तथेषत्तद्गुणं ताभ्यां हरीतकीधात्रीभ्यां समाना गुणा यस्य तत्तद्गुणं किञ्चिदक्षम् । ननु हरीतक्यादीनां स्थूलसूक्ष्मादिभेदेनानियतस्वरूपत्वात्कथमिवोपयोगः क्रियतामिति केचित् । तान् ब्रूमहे । अक्षं तावदत्र कर्षप्रमाणं ग्राह्यम् । तथा च धन्वन्तरिराख्यत्—" बिभी-तकः कर्षफल इत्यादि " । अन्वर्था हीयं संज्ञा । कर्षः कर्षप्रमाणं फलं यस्य स कर्षफल इति । तदेवं बिभीतकस्य फलं यत्कर्षप्रमाणं तद् ग्राह्यमित्यवतिष्ठते । हरीत-क्या अपि प्रमाणं नियतमेव । तन्त्रान्तरेऽप्युक्तम्—"नवा स्निग्धा घना वृत्ता गुर्वी क्षिप्ता तथाऽम्भसि । निमज्जेद्या प्रशस्तत्वाद् गुणकृत्सा प्रकीर्तिता । नवादिगुण-युक्तत्वं तथैकत्र द्विकर्षता । हरीतक्याः फले यत्र तेनैतच्छ्रेष्ठमुच्यत इति । तदेवं द्विकर्षप्रमाणत्वं हरीतक्याः स्थितम् । धात्रीफलस्याऽपि युक्त्या नियतप्रमाणत्व-मेव" । तथा चोक्तं तन्त्रान्तरे—" अभयैका प्रदातव्या द्वावेव तु बिभीतकौ ।

धात्रीफलानि चत्वारि त्रिफलेयं प्रकीर्तितेति"। तदेवमामलकानामर्धकर्षप्रमाणत्वमवतिष्ठते । तस्मान्नियतप्रमाणत्वं त्रिफलायाः स्थितम् ।

**इयं रसायनवरा त्रिफलाऽक्ष्यामयापहा ।**
**रोपणी त्वग्गदक्लेदमेदोमेहकफास्रजित् ॥ १५७ ॥**

इयमीदृशी त्रिफला रसायनवरा । चक्षूरोगघ्नी । रोपणी व्रणानाम् । त्वग्गदाः कुष्ठादयः । क्लेदो व्रणादीनां स्रावः । मेदश्चतुर्थो धातुः । मेहः प्रमेहः । कफः श्लेष्मा । अस्रं रक्तम् । तानि जयति या सैवम् ।

**सकेसरं चतुर्जातं त्वक्पत्रैलं त्रिजातकम् ।**

दीपनरोचनमित्येतत्पर्यन्तम् । त्वक् च पत्रं चैला चेति द्वन्द्वैकवद्भावः । एतस्य नाम त्रिजातकं त्रिसुगन्धमिति । एतत्त्रिजातकं केसरयुक्तं चतुर्जातकमित्युच्यते । तच्च पित्तप्रकोपित्वादिगुणम् ।

**पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं दीपनरोचनम् ॥ १५८ ॥**
**रसे पाके च कटुकं कफघ्नं मरिचं लघु ।**

पित्तकोपि तीक्ष्णादिगुणयुक्तं रसे पाके च कटुकं मरिचं कफघ्नं लघु च । कटुकरसत्वेन लब्धे पाकग्रहणमतिशयार्थम् ।

**श्लेष्मला स्वादुशीताऽऽर्द्रा गुर्वी स्निग्धा च पिप्पली ।**
**सा शुष्का विपरीताऽतः स्निग्धा वृष्या रसे कटुः ॥ १५९ ॥**
**स्वादुपाकाऽनिलश्लेष्मश्वासकासापहा सरा ॥ १६० ॥**
**न तामत्युपयुञ्जीत रसायनविधिं विना ।**

आर्द्राऽशुष्का पिप्पली श्लेष्मला स्वादुरसा शीतवीर्या गुरुः स्निग्धा च। सा शुष्का पिप्पल्यत आर्द्रायाः पिप्पल्याः सकाशाद्विपरीता शीतविपर्ययेणोष्णा। गुरुविपर्ययेण लघुः । स्निग्धविपर्ययस्त्वत्र नास्ति स्निग्धेत्युक्तत्वात् । तथा वृष्या रसे कटुश्च । कटुरसत्वाच्च कटुपाकत्वं प्राप्तमित्याह । स्वादुपाका । तथाऽनिलादीन् हन्ति सरा च एवंविधामपि तां पिप्पलीमत्यर्थं न युञ्जीत रसायनविधिं विना । पिप्पलीं वर्धमानादिरसायनविधान एवातिशयेनोपयुञ्जीत ।

**नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत् ॥ १६१ ॥**
**रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित् ।**

नागरं शृङ्गबेरं दीपनादिगुणयुक्तम् । ग्राहि विड्विबन्धकृत् । तथा हृद्यम् । विबन्धनुत् स्रोतःशुद्धिकृत् ।

**तद्वदार्द्रकमेतच्च त्रयं त्रिकटुकं जयेत् ॥ १६२ ॥**
**स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् ।**

आर्द्रकं शुण्ठीसमानगुणमेव । एतच्च त्रयं मरिचपिप्पलीशुण्ठ्याख्यं त्रिकटुकसंज्ञं स्थौल्यादीन् जयेत् ।

**चविका पिप्पलीमूलं मरिचाल्पान्तरं गुणैः ॥ १६३ ॥**

चविका पिप्पलीमूलं मरिचात् स्तोकविशेषगुणं गुणैर्भवति । कटुरसविपाकं कफघ्नं लघूष्णवीर्यं चेत्यर्थः । गुणशब्देन रसविपाकादयोऽपि तन्त्रान्तराद् गृह्यन्ते नतु पारिभाषिका एव गुरुलघ्वादयो व्याप्तिन्यायात् ।

**चित्रकोऽग्निसमः पाके शोफार्शःकृमिकुष्ठहा ।**

चित्रको दहनसंज्ञकोऽग्निसमः पाकेऽत्यन्तोष्ण इत्यर्थः । तथा शोफादीन् हन्ति ।

**पञ्चकोलकमेतच्च मरिचेन विना स्मृतम् ॥ १६४ ॥**
**गुल्मप्लीहोदराऽऽनाहशूलघ्नं दीपनं परम् ।**

एतच्च पूर्वोक्तं मरिचरहितं पिप्पलीपिप्पलीमूलचव्यचित्रकशुण्ठ्याख्यं पञ्चकोलसंज्ञं स्मृतं वैद्यके तन्त्रे । तथा गुल्मादिघ्नमग्निदीपनं च ।

**बिल्वकाश्मर्यतर्कारीपाटलाटुण्टुकैर्महत् ॥ १६५ ॥**
**जयेत्कषायतिक्तोष्णं पञ्चमूलं कफानिलौ ।**

बिल्वादीनामुपलक्षणे तृतीया । बिल्वादिभिरुपलक्षितं महत्पञ्चमूलं कफानिलौ जयेत् । तच्च कषायतिक्तरसमुष्णवीर्यं च । बिल्वं श्रीफलम् । काश्मर्यो गम्भारी । तर्कार्यरणिका । पाटला ताम्रपुष्पा । टुण्टुकः स्योनाकः । महद् गुरु बृहदनल्पमिति पर्यायाः ।

**ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ॥ १६६ ॥**
**स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ।**

पञ्चमूलमिति वर्तते । ह्रस्वं कनीयो लघ्वल्पमिति पर्यायाः । बृहतीद्वयं क्षुद्रबृहती महाबृहती च । अंशुमतीद्वयं शालिपर्णी पृश्निपर्णी च । गोक्षुरको भक्षकण्टकः । इदं ह्रस्वं पञ्चमूलं स्वादुपाकरसं नातिशीतं नात्युष्णं सर्वदोषजिच्च ।

**बलापुनर्नवैरण्डशूर्पपर्णीद्वयेन तु ॥ १६७ ॥**
**मध्यमं कफवातघ्नं नाऽतिपित्तकरं सरम् ।**

एतैः पञ्चभिर्मध्यमं पञ्चमूलम् । एतच्च कफवातघ्नं नातिपित्तकरं सरं च ।

अधुना चतुर्थं पञ्चमूलमाह—

**अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् ॥ १६८ ॥**
**जीवनाख्यं च चक्षुष्यं वृष्यं पित्तानिलापहम् ।**

अभीरुवीरादिभिः पञ्चभिर्जीवनाख्यं पञ्चमूलं चक्षुष्यादिगुणयुक्तम् ।

पञ्चमं पञ्चमूलमाह—

**तृणाख्यं पित्तजिद्दर्भकासेक्षुशरशालिभिः ॥ १६९ ॥**

तृणसंज्ञं पञ्चमूलं दर्भकासेक्षुशरशालिभिः । तच्च पित्तजित् । सङ्ग्रहे त्वधिकमुक्तम् । यथा—"सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः । विषदोषहरं शीतं

सकषायं रसायनम् । रूप्यं स्निग्धं कषायाम्लं विपाके मधुरं सरम् । वयसः स्थापनं शीतं लेखनं वातपित्तजित् । ताम्रं सतिक्तमधुरं कषायं लेखनं लघु । कटुपाकरसं शीतं रोपणं कफपित्तजित् । कांस्यं कषायानुरसं विशदं लेखनं सरम् । दृष्टिप्रसादनं रूक्षं तिक्तं पित्तकफापहम् । सतिक्तलवणं भेदि पाण्डुत्वक्क्रिमिवातनुत् । लेखनं पित्तलं किंचित् त्रपु सीसं च तद्गुणम् । चक्षुष्यं कृष्णलोहं तु कषायं स्वादुतिक्तकम् । लेखनं वातलं शीतं कृमिकुष्ठकफप्रणुत् । गात्रशैथिल्यपालित्यपाण्डुघ्नं शोषशोफजित् । तद्वत्तीक्ष्णं विशेषेण तद्विकाशि सुदुर्जरं । पद्मरागमहानीलपुष्परागाऽश्मगर्भकाः । मुक्ताविद्रुमवज्रेन्द्रवैदूर्यस्फटिकादिकम् । मणिरत्नं सरं शीतं कषायं स्वादु लेखनम् । चक्षुष्यं धारयेत्पाणौ पाप्माऽलक्ष्मीविषापहम् । सक्षार उष्णवीर्यश्च काचो दृष्टिकृदञ्जनात् । शङ्खोदधिमलौ शीतौ कषायावतिलेखनौ । तुत्थकं कटुकं क्षारं कषायं विशदं लघु । लेखनं भेदि चक्षुष्यं कण्डूकृमिविषापहम् । विशदो गैरिकः स्निग्धः कषायमधुरो हिमः । कफघ्नी तिक्तकटुका मनोह्वा लेखनी सरा । स्निग्धं कषायं कटुकं हरितालं विषप्रणुत् । कषायमधुरं शीतं लेखनं स्निग्धमञ्जनम् । रक्तपित्तविषच्छर्दिहिध्माघ्नं दृक्प्रसादनम् । स्रोतोऽञ्जनं वरं तत्र ततः सौवीरकाञ्जनम् । कफघ्नं तिक्तकटुकं छेदि सोष्णं रसाञ्जनम् । सर्वदोषप्रशमनं कासमोहक्षयापहम् । कफघ्नमुष्णकटुकं शिलाजतु रसायनम् । तिक्तं च छेदनं योगवाहित्वात्सर्वरोगजित् । कषाया मधुरा रूक्षा कफघ्नी वंशरोचना । तुगाक्षीरी क्षयश्वासकासघ्नी मधुरा हिमा । कारवी कुञ्चिकाऽजाजी कवरी धान्यतुम्बरु । अन्नगन्धहरं रुच्यं दीपनं कफवातजित् । बाष्पिका कटुतीक्ष्णोष्णा कृमिश्लेष्महरा परम् । तद्वच्च राजिका विघ्नसाधनी दीपनी परम् । शूलाटोपहरो रुच्यो दीप्यकः कोष्ठशूलजित् । अहृद्याः सर्षपाः स्निग्धा बाष्पिकावत्प्रकीर्तिताः । शताह्वाकुष्ठतगरसुरदारुहरेणवः । एलैलवालुसरलत्वग्व्याघ्रनखचोरकाः । लघूष्णाः कटुकाः पाके कफवातनिबर्हणाः । सैर्यकस्तिक्तमधुरः स्निग्धोष्णः कफवातजित् । बस्तिमूत्रविबन्धघ्नो वृष्यो गोक्षुरको हिमः । पाचनं कफपित्तघ्नं तिक्तं शीतं विषाद्वयम् । कफघ्नं तिक्तकटुकं मुस्तं सङ्ग्राहि पाचनम् । तिक्ताऽमृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी । दीपनी ज्वरहृद्दाहकामलावातरक्तनुत् । तिक्तशीतौ ज्वरहरौ लघू भूनिम्बपर्पटौ । निम्बस्तिक्तो हिमः कुष्ठकृमिपित्तकफापहः । महानिम्बः परं ग्राही कषायो रूक्षशीतलः । गुग्गुलुः पिच्छिलः स्पर्शे विशदोऽभ्यवहारतः । सस्वादुः सकटुस्तिक्तः सकषायो रसायनम् । व्रण्यः स्वर्यः कटुः पाके रूक्षः सूक्ष्मोऽग्निदीपनः । क्लेदमेदोऽनिलश्लेष्मगण्डमेहापचीकृमीन् । पिटिकाग्रन्थिशोफांश्च हन्त्युष्णः स्रंसनो लघुः । शङ्खपुष्पी सरा तिक्ता मेध्या कृमिविषापहा । कटुतिक्तोष्णमधुरा स्निग्धा स्वादुकफापहा । पित्तास्रविषतृड्दाहकृमिघ्नं गुरु रूक्षणम् । सर्वं सतिक्तं मधुरं चन्दनं शिशिरं परम् । लघु रक्तं, तथोशीरं वातलं पाचनं च तत् । ज्वरातिसारवमथुरक्त-

पित्तकफापहम्। मधुकं रक्तपित्तघ्नं व्रणशोधनरोपणम्। गुरु स्वादु हिमं वृष्यं चक्षुष्यं स्वरवर्णकृत्। कटुतिक्ते निशे कुष्ठमेहपित्तकफापहे। प्रलेपाज्जयतः कण्डूं शोफं दुष्टव्रणं विषम्। प्रपौण्डरीकं चक्षुष्यं शिशिरं व्रणरोपणम्। कषायतिक्तमधुरं रक्तपित्तप्रसादनम्। बलात्रयं स्वादु वृष्यं स्निग्धं शीतं बलप्रदम्। तत्र नागबला बल्या क्षतक्षीणहिता गुरुः। ताम्बूलं कटु सक्षारं रुच्यमुष्णं कफप्रणुत्। भेदि सम्मोहकृत्पूगं कषायं स्वादु रोचनम्। जातिपत्री कटुफलं कङ्कोलकलवङ्गकम्। लघु तृष्णापहं हृद्यं वक्त्रदौर्गन्ध्यनाशनम्। सस्वादुतिक्तस्तृष्णाघ्नः कर्पूरश्छेदनो हिमः। लताकस्तूरिका तद्वन्मुखशोषहरा परम्। कषायमधुरं शीतं पद्मं पित्तकफास्रजित्। तद्वद्वकुलपुन्नागकुमुदोत्पलपाटलम्। सचम्पकं ततो न्यूनं गुणैः कोरण्टकिंशुकम्। मालतीमल्लिकापुष्पं तिक्तं जयति मारुतम्। विषपित्तकफान्नागं सिन्दुवारं च तद्गुणम्। कफघ्नं कैतिकं तिक्तं शैरीषं विषहारि च। वातलं पुष्पमागस्त्यं कषायं कफपित्तजित्। बन्धूकं श्लेष्मलं ग्राहि तद्वदेव च यूथिका। कफघ्नमुष्णवीर्यं च कुङ्कुमं, व्रणशोधनम्। अवल्गुजैडगजजं बीजं वातकफप्रणुत्। आस्या वर्णश्लेष्ममेदःसौकुमार्यकृदन्यथा। अतोऽध्वाऽग्निबलायूंषि कुर्याच्चङ्क्रमणं सुखम्। मारुतस्यानुलोम्यं च खुडस्तम्भश्रमापहम्। अन्वर्थसंज्ञं पादत्रं बलकृच्चक्षुष्यं तथा। वर्ण्यं नेत्रहितं छत्रं वातवर्षातपापहम्। प्रवातो रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहतृड्भ्रमान्। श्रमाग्निमूर्च्छाश्च जयेदप्रवातस्त्वतोऽन्यथा। प्राग्वायुरुष्णोऽभिष्यन्दि त्वग्दोषाऽर्शोविषक्रिमीन्। सन्निपातज्वरश्वासमामवायुं च कोपयेत्। याम्योऽस्रग्वातकफकृच्छीतः स्वादुः कषायकः। कषायः पश्चिमो रूक्षो लघुर्नातिविदह्यते। वातकृत्कफपित्तघ्नो मूर्च्छादाहश्रमापहः। स्निग्धः शीतो लघुः सात्म्य उत्तरः षड्सोऽनिलः। ऐशानः कटुरूक्षोष्ण आग्नेयश्चैव मारुतः। अम्लो विदाही नैर्ऋत्यो वायव्यस्तिक्त उच्यते। आतपो भ्रमतृट्स्वेददाहमूर्च्छाविवर्णताः। कुर्यात्पित्तास्रवह्नींश्च च्छाया त्वेतान्व्यपोहतीति"।

सम्प्रति सुखग्रहणधारणार्थं सङ्ग्रहश्लोकमाह।

**शूकशिम्बीजपक्वान्नमांसशाकफलौषधैः।**
**वर्गितैरन्नलेशोऽयमुक्तो नित्योपयोगिकः॥ १७०॥**

शूकधान्यादिभिर्वर्गितैर्वर्गीकृतैरयमन्नस्य लेश एकदेशः स्तोकमात्रो निर्दिष्टः। किम्भूतः? नित्योपयोगो विद्यते यस्य स नित्योपयोगिकः। सदोपयोगवानित्यर्थः। मात्रायोगक्रियादेशकालादिविशेषाच्चोक्तानामपि द्रव्याणामन्यथात्वं दृष्टम्। यथा— "तिलशो निषेव्यमाणं विषमपि सञ्जायतेऽमृतसमानम्। भल्लातकः सह तिलैस्तत्कार्यमपि कुष्ठमुपहन्ति। संस्कारेण लघुभ्यः सक्तुभ्यः सिद्धपिण्डका गुरवः। मरुवासिष्वतिसात्म्यं दधिपीलुशमीकरीराणाम्। घृतदुग्धं हेमन्ते मन्दाग्निकृत्तोत्तरं भवेत्प्रायः। दधिदुग्धं वातघ्नं तदजातं वातकृद्भवति। रेचनमपि च क्षीरं

गव्यं सङ्ग्राहि कस्यचिद्भवति"। तस्मादेवमादि स्वबुद्ध्यैवाऽभ्यूह्यम्। शास्त्रकृता तु ग्रन्थगौरवभयात्स्पष्टं कृत्वा तन्नोक्तम्। प्रदेशान्तरेषु युक्त्यैव प्रतिपादितमिति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामन्नस्वरूपादिविज्ञानीयोऽध्यायः षष्ठः॥

## सप्तमोऽध्यायः।

अन्नपानस्वरूपं शरीरसन्धारणार्थं प्रागुक्तम्। पथ्यमपि चान्नपानं विषाद्युपहतं रोगाय मृत्यवे वा सम्पद्यते। अतस्तद्रक्षणाध्यायोऽयमारभ्यते।

**अथातोऽन्नरक्षाध्यायं व्याख्यास्यामः।**

अन्नस्य रक्षाऽन्नरक्षा सोपदेश्या, यत्राध्याये सोऽप्युपचारादन्नरक्षेत्युच्यते। यथा—शिशुपालवधः काव्यमिति। शेषं व्याख्यानमत्र पूर्ववत्कार्यम्।

**राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत्।**
**सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः॥ १॥**

राजा नृपः, प्राणाचार्यं वैद्यं, राजगृहासन्ने निवेशयेदावासयेत्। एवं सति यो गुणः स्यात्तमाह। सर्वदेत्यादि। सर्वदा सर्वकालं रात्रौ दिवा वा, नृपभवनसमीपस्थितः स वैद्यः सर्वत्रान्नपानशयनमाल्यादौ प्रतिजागृविर्दत्तावधानो भवति।

ननु किमेवं क्रियत इत्याह—

**अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः।**
**योगक्षेमौ तदायत्तौ धर्माद्या यन्निबन्धनाः॥ २॥**

महीपतेः सम्बन्ध्यन्नपानं विषाद्विषसंस्पर्शाद्विशेषेणाऽतिशयेन रक्षेत्। अन्नपानमित्युपलक्षणम्। शयनवस्त्रगन्धरत्नमाल्यादीनामपि परिरक्ष्यत्वात्। किमिति नृपान्नपानादि विशेषेण रक्षेदित्याह। योगेत्यादि। योगोऽन्नवस्त्रादिभिः सम्बन्धः। क्षेमस्तेषामन्नादीनां चौराद्युपद्रवरक्षणम्। द्वावप्येतौ तदायत्तौ नृपायत्तौ स्याताम्। क्षेमशब्दोऽर्धर्चादिः। धर्माद्या इति। धर्मार्थकाममोक्षा यन्निबन्धना योगक्षेमनिबन्धनाः।

सम्प्रति विषदुष्टस्य भक्तस्य लक्षणमाह—

**ओदनो विषवान् सान्द्रो यात्यविस्राव्यतामिव।**
**चिरेण पच्यते पक्वो भवेत्पर्युषितोपमः॥ ३॥**
**मयूरकण्ठतुल्योष्मा मोहमूर्च्छाप्रसेककृत्।**
**हीयते वर्णगन्धाद्यैः क्लिद्यते चन्द्रकाचितः॥ ४॥**

विषवानोदनः सान्द्रो विलेप्याकारः, न च विस्रावयितुं शक्यते, यतः पृथक्सिक्थो न भवेत्। तथा चिरेण पच्यते बहुना कालेन पाकं याति। स च पक्वो

निष्पन्नपाकः सद्य एव पर्युषितोपमो दिवसान्तरितोऽतिक्रान्ताहोरात्रः । पर्युषितोपम इति । यथा पर्युषितं भक्तं निरूष्म स्तब्धं च भवति । तथा विषदूषितं सद्योऽन्नतारितमपि तादृशमेव भवति । मयूरकण्ठेन तुल्य ऊष्मा बाष्पराजिर्नानावर्णा यस्य स तथोक्तः । स चोपयुक्तो मोहमूर्च्छाप्रसेकान्करोति । मोहो वैचित्यम् । मूर्च्छा संज्ञाभ्रंशः । प्रसेकः श्लेष्मनिष्ठीवनम् । हीयते वर्णगन्धाद्यैरित्यादिशब्देन रसस्पर्शादिपरिग्रहः । प्रक्लिन्नो भवति । सलिलमध्यक्षिप्ततैलबिन्दुसदृशैश्चन्द्रकैश्च पूर्णो भवति । इति चक्षुरादिभिः परीक्षा ।

व्यञ्जनानां परीक्षामाह—

**व्यञ्जनान्याशु शुष्यन्ति ध्यामक्वाथानि तत्र च ।**
**हीनातिरिक्ता विकृता छाया दृश्येत नैव वा ॥ ५ ॥**
**फेनोर्ध्वराजीसीमन्ततन्तुबुद्बुदसम्भवः ।**
**विच्छिन्नविरसा रागाः खाण्डवाः शाकमामिषम् ॥ ६ ॥**

व्यञ्जनानि सूपादीनि दधितक्रदाडिमादिसंस्कृतान्याशु शीघ्रं शुष्काणि भवन्ति । क्वाथश्च तेषां ध्यामो मलिनो भवति । तत्र चेति । व्यञ्जनवत्सु क्वाथेषु हीनाधिका शिरोविरहादिलक्षणविकारोपेता चात्मीया छाया प्रतिबिम्बं दृश्यते । नैव वा क्वचिदपि छाया न दृश्यते । न चेदमरिष्टं, सनिमित्तत्वात् । फेनादीनां सम्भवः । तत्रेति प्रकृतम् । व्यञ्जनोपलक्षितेषु सर्वद्रवेष्वेव । विशेषेण पुनर्लवणोल्बणद्रवे फेनमाला । ऊर्ध्वराजीसम्भवं तु रसकादिषु स्वयं दर्शयिष्यति । विच्छिन्नविरसा रागा इति । विच्छिन्नो रक्तवर्णः क्वचित्क्वचित्प्रदेशे द्राक्षापानादौ रागो भवति । विरसं विगतरसं तद्भवति । यथा राग एवं खाण्डवोऽपि । शाकमामिषं च छिन्नं= स्थाने स्थाने त्रुट्यद्विरसं च ।

यत्र द्रवे यादृशी राजी सम्भवति तां विशेषतो दर्शयन्नाह—

**नीला राजी रसे ताम्रा क्षीरे दधनि दृश्यते ।**
**श्यावा पीताऽसिता तक्रे घृते पानीयसन्निभा ॥ ७ ॥**
**काली मद्याम्भसोः क्षौद्रे हरित्तैलेऽरुणोपमा ।**
**पाकः फलानामामानां पक्वानां परिकोथनम् ॥ ८ ॥**
**द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते ।**
**मृदूनां कठिनानां च भवेत्स्पर्शविपर्ययः ॥ ९ ॥**
**माल्यस्य स्फुटिताग्रत्वं म्लानिर्गन्धान्तरोद्भवः ।**
**ध्याममण्डलता वस्त्रे शदनं तन्तुपक्ष्मणाम् ॥ १० ॥**
**धातुमौक्तिककाष्ठाश्मरत्नादिषु मलाक्तता ।**
**स्नेहस्पर्शप्रभाहानिः सप्रभत्वं तु मृन्मये ॥ ११ ॥**

मौ० टि० १—पूतीभावः ।



मांसरसे विषदूषिते नीला नीलवर्तिकाकारा राजी दृश्यत इति प्रकृतेन सम्बन्धः। एवं चाग्रेऽपि राजी दृश्यत इति योज्यम्। क्षीरमध्ये ताम्रा ताम्रवर्णा। दधनि दध्नि श्यावा दृश्यते लक्ष्यते चक्षुषा। राजीति सर्वत्र प्रकृतम्। पीताऽसिता तक्र इत्यादि। तक्रस्य मध्ये पीताऽसिता आनीलपीता राजी दृश्यत इति प्रकृतम्। घृते सलिलनिभा। काली कृष्णा मद्यस्य तोयस्य च विषदूषितस्य। क्षौद्रे हरिदिति। माक्षिकमध्ये हरिता राजी दृश्यते। तैलेऽरुणोपमेषल्लोहिताकारा। उदाहरणमात्रं त्वेतत्। मस्तुनः कपोताभा। धान्याम्लस्य कृष्णा। द्रवौषधस्य कपिला। तथा। आमानां फलानां पाकः। पक्वानां परिकोथनं शाटितत्वं भवति। द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते। यथासंख्यं योज्यम्। आर्द्राणां म्लानिः। शुष्काणां वैवर्ण्यं श्यावत्वादिलक्षणम्। मृदूनां कठिनत्वं कठिनानां मृदुत्वम्। अयं स्पर्शविपर्ययः। माल्यस्य पुष्पादेः स्फुटितं विशीर्णमग्रं प्रान्तो यस्य तत्स्फुटिताग्रं तद्भावस्तत्त्वम्। म्लान्युद्भवो म्लानता। गन्धान्तरोद्भवः स्वगन्धनाशः, अन्यस्य सम्भवश्च। वसागन्धस्य च तैले सम्भवः। ध्याममण्डलता वस्त्रे—वस्त्र आस्तरणप्रावरणादिरूपे ध्यामानि मलिनानि मण्डलानि यस्य वस्त्रस्य तद्भावस्तत्त्वम्। शदनं श्यातः पातः। केषाम्। तन्तूनां रोम्णां पक्ष्मणां च पार्श्ववर्तिनां वस्त्रसम्बन्धिनामेव। धातुर्लोहादिः। मौक्तिकं मुक्ता। काष्ठं दारु। अश्मा पाषाणः। रत्नानि वज्रमरकतादीनि। आदिशब्देन शङ्खशुक्त्यादिपरिग्रहः। तेषु धात्वादिषु मलाक्तता पङ्कोपदिग्धता। स्नेहहानिस्तेषामेव धात्वादीनां स्निग्धत्वव्यपगम इत्यर्थ। एवं स्पर्शप्रभाहानी। मृन्मये तु भाण्डे विषदूषिते निष्प्रभे सप्रभत्वम्।

इदानीं यो विषं ददाति तस्य लक्षणमाह—

**विषदः श्यावशुष्कास्यो विलक्षो वीक्षते दिशः।**
**स्वेदवेपथुमांस्त्रस्तो भीतः स्खलति जृम्भते॥ १२॥**

विषं ददातीति विषदो नरः, श्यावं शुष्कमास्यं मुखं यस्याऽसौ श्यावशुष्कास्यः श्यामशुष्कवदनः। किं करोति? विलक्षो वीक्षते दिशः। दिश इति समन्तादित्यर्थः। विलक्ष इति लज्जावान्। वीक्षतेऽवलोकयति। किञ्च स्वदोषशङ्कया स्वेदवान्वेपथुमान्। त्रस्तः शरीरेण जातकम्पत्वात्। भीतश्चित्तेन सोद्वेगतयोपलक्ष्यमाणत्वात्। स्तम्भकुड्यादिभिरात्मानमन्तर्धापयितुमिच्छन्नितस्ततो गच्छंश्च स्खलितगतिर्भवति तत आह स्खलति। पुनःपुनश्च जृम्भां करोति तेनाह जृम्भते। उपलक्षणं चेदं तत्तत्कालभाविनीनां क्रियाणाम्। तद्यथा—अस्थानहासो। पृष्टोऽसम्बद्धमुत्तरं ददाति नैव वा वदति। विवक्षुर्मुह्यत्यङ्गुलीः स्फोटयति। शिरः कण्डूयते। ओष्ठौ लेढि। भुवं विलिखति। क्रियासु त्वरते। विपरीतमाचरति। स्वभूमौ च नावतिष्ठते।

इदानीं सविषस्याग्निप्रक्षेपणादिकमुपदिशन्नाह—

**प्राप्यान्नं सविषं त्वग्निरेकावर्तः स्फुटत्यति।**
**शिखिकण्ठाभधूमार्चिरनर्चिर्वोग्रगन्धवान्॥ १३॥**

सविषमन्नं प्राप्याऽग्निः स्फुटत्यति चटचटायतेऽतिशयेनेत्यर्थः। एकावर्त इति। एक एवावर्तो यस्य। संहृतसर्वज्वालत्वादसावेकावर्तः। शिखिकण्ठाभधूमार्चिः शिखी मयूरस्तस्य कण्ठ इन्द्रायुधवदनेकवर्णस्तस्येवाऽभा ययोर्धूमार्चिषोस्ते शिखिकण्ठाभे तादृशे धूमार्चिषी यस्याग्नेरसौ शिखिकण्ठाभधूमार्चिरिन्द्रायुधवदनेकवर्णधूमज्वाल इति यावत्। अनर्चिर्वाऽज्वाल इति वा। उग्रगन्धवानिति कुणपगन्धवान्। निदर्शनं चेदम्। धूमोऽप्यस्य प्रसेकरोमहर्षशिरोवेदनापीनसदृष्ट्याकुलता अप्युत्पादयति।

स्नेहलवणयोगादप्यग्निरेवं स्यादतः पक्षिमृगैरपि परीक्षाप्रकारान्तरं दर्शयन्नाह—

**म्रियन्ते मक्षिकाः प्राश्य, काकः क्षामस्वरो भवेत्।**
**उत्क्रोशन्ति च दृष्ट्वैतच्छुकदात्यूहसारिकाः, ॥ १४॥**
**हंसः प्रस्खलति, ग्लानिर्जीवञ्जीवस्य[1] जायते,।**
**चकोरस्याऽक्षिवैराग्यं, क्रौञ्चस्य स्यान्मदोदयः, ॥ १५॥**
**कपोतपरभृद्[3]दक्ष[4]चक्रवाका जहत्यसून्।**
**उद्वेगं याति मार्जारः, शकृन्मुञ्चति वानरः॥ १६॥**
**हृष्येन्मयूरस्तद्दृष्ट्वा मन्दतेजो भवेद्विषम्।**
**इत्यन्नं विषवज्ज्ञात्वा त्यजेदेवं प्रयत्नतः॥ १७॥**
**यथा तेन विपद्येरन्नपि न क्षुद्रजन्तवः।**

मक्षिकाः सविषेऽन्ने न निलीयन्ते। निलीनास्तु सद्यो विपद्यन्ते। विषदुष्टाहारात्तु काकः क्षामस्वरो भवेत्। उत्क्रोशन्त्युच्चैर्विक्रोशन्ति दर्शनादेव शुकदात्यूहसारिकाः। विषदर्शनमात्रादेव च हंसगतिः स्खलति। ग्लानिर्जीवञ्जीवस्य जायते। उपलक्षणं चेदम्। मरणमपि कस्यचित्, न ग्लानिरेव जीवञ्जीवकस्य। चकोरस्याऽक्षिविरक्तत। दृष्ट्वैतदिति सर्वत्र योजनीयम्। क्रौञ्चस्य स्यान्मदोदयो मदोत्पत्तिः। कपोतपरभृद्दक्षचक्रवाकास्त्यजन्त्यसून् प्राणान्विजहति, अत्यर्थं मरणदुःखाभ्याहताः। उद्विजतेऽत्यर्थं मार्जारः। वानरस्तु शकृत् पुरीषं मुञ्चति। उपलक्षणं चेदम्। पृष्ठतोमुखो रोदिति च। तथा हृष्येन्मयूरस्तद्दृष्ट्वा—तदिति सविषान्नपरामर्शः। दृष्ट्वेत्यनुवर्तमानेऽपि। पुनर्दृष्ट्वेति वचनं सर्वत्र मध्ये सम्प्रत्ययार्थमाद्यन्ताभ्यां गृहीतत्वात्। विषं चास्य दर्शनादेव मन्दतेजस्कं भवति। एवं पूर्वोक्ताभिः परीक्षाभिरन्नं भक्तादिः विषवद्विषसंसृष्टं ज्ञात्वा त्यजेदेतत्। कथम्? प्रयत्नतः प्रयत्नेन। तमेव प्रयत्नं दर्शयन्नाह। यथा येन प्रकारेण त्यज्यमानेन क्षुद्रजन्तवो

---

मौ० टि० १—वर्षाकाले ध्वनिमान् पक्षी। २ दृष्टिमात्रेण विषहन्ता पक्षी। ३ परभृदत्र कोकिलः। ४ कुक्कुटः।



मक्षिकादयोऽपि तेन विषेण न विपद्येरन् न नश्येयुस्तथा त्यजेत् । क्षुद्रजन्तवोऽपि किं पुनर्महान्त इत्यपिशब्दार्थः ।

**स्पृष्टे तु कण्डूदाहोषाज्वरार्तिस्फोटसुप्तयः ॥ १८ ॥**
**नखरोमच्युतिः शोफः, सेकाद्या विषनाशनाः ।**
**शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः ॥ १९ ॥**
**ससोमवल्कतालीसपत्रकुष्ठाऽमृतान्वितैः ।**

सविषेऽन्ने मुखहस्तादिभिस्तु स्पृष्टे सति कण्ड्वादयः शोफान्ताः स्युः । ऊषा प्रादेशिको दाहः । सर्वदाहस्तु दाहः । अर्तिः शूलम् । सुप्तिरङ्गस्याऽचैतन्यम् । नखरोमच्युतिर्नखशातो रोमशातः । ननु नखशातः केवलं वातरोगेषु पठितः, विषे च सन्निपातकोप उक्तः, तत्कथमेतदुच्यते ? जात्यन्तर्भूत एवायं विषनिमित्त इत्यदोषः । तत्र तेषु विषसंस्पर्शजेषु कण्ड्वादिरोगेषु सेकाद्याः शस्ता यतो विषनाशनाः । प्रलेपाश्च हिताः । कैरित्याह । सेव्यादिभिः ।

**लालाजिह्वौष्ठयोर्जाड्यमूषा चिमिचिमायनम् ॥ २० ॥**
**दन्तहर्षो रसाऽज्ञत्वं हनुस्तम्भश्च वक्त्रगे ।**
**सेव्याद्यैस्तत्र गण्डूषाः सर्वं च विषजिद्धितम् ॥ २१ ॥**

वक्त्रगे मुखप्राप्ते लाला भवति । जिह्वौष्ठयोर्जाड्यं भवति । ऊषादयश्च स्युः । रसाऽज्ञत्वं=जिह्वा रसं न चेतयत इत्यर्थः । हनोः स्तम्भश्च स्यात् । तत्र सेव्याद्यैः पूर्वोक्तैर्गण्डूषा हिताः । सर्वं चान्यदपि यद्विषं जयति तद्धितम् ।

**आमाशयगते स्वेदमूर्च्छाऽऽध्मानमदभ्रमाः ।**
**रोमहर्षो वमिर्दाहश्चक्षुर्हृदयरोधनम् ॥ २२ ॥**
**विन्दुभिश्चाऽऽचयोऽङ्गानां पक्वाशयगते पुनः ।**
**अनेकवर्णं वमति मूत्रयत्यतिसार्यते ॥ २३ ॥**
**तन्द्रा कृशत्वं पाण्डुत्वमुदरं बलसंक्षयः ।**
**तयोर्वान्तविरिक्तस्य हरिद्रे कटभीं गुडम् ॥ २४ ॥**
**सिन्दुवारितनिष्पावबाष्पिकाशतपर्विकाः ।**
**तण्डुलीयकमूलानि कुक्कुटाण्डमवल्गुजम् ॥ २५ ॥**
**नावनाञ्जनपानेषु योजयेद्विषशान्तये ।**

विषान्न आमाशयं प्राप्ते स्वेदादयः स्युः । हृदयस्य रोधनं स्तम्भः । विन्दुभिर्नानावर्णैरङ्गानामाचयः समन्ताच्चयनम् । पक्वाशयगते तु विषेऽनेकवर्णं वमति । मूत्रयत्यतिसार्यते । तन्द्रादयश्च भवन्ति । तयोरामपक्वाशयगतयोर्विषयोर्वर्त्तमानस्य पुंसो यथायोगं वान्तविरिक्तस्य हरिद्रे कटभीमित्यादिकमौषधं नावनादिषु योजयेत् । तत्र मदनफलालाबुकुम्भीकोशातकीफलैर्मधुयुक्तैर्निष्पावाम्बुयुक्तैर्वमनम् । तस्य स्नेहयित्वा विरेचनम् । पक्वाशयगते वमितस्यैव नीलिनीफलयुक्तेन घृतेन विरेचनमेव ।

**विषभुक्ताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ॥ २६ ॥**
**सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम्।**
**शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥ २७ ॥**

विषभुक्ताय पुंस ऊर्ध्वमधश्च शुद्धाय काले सूक्ष्ममतिश्लक्ष्णं ताम्रचूर्णं समाक्षिकं दद्यात्। किम्भूतम् ? हृद्विशोधनं हृदयं शोधयेदित्यर्थः। विषभुक्तायेत्याहिताग्न्यादित्वात्परनिपातः। काल इत्युपलक्षणम्। देशसात्म्याग्न्यादीन्यपेक्षेतेत्यर्थः। शुद्धे हृदि स्वलिङ्गे ज्ञाते ततोऽनन्तरं हेमचूर्णस्य शाणं कर्षचतुर्थांशं दापयेत्।

हेम्नि दत्ते सति यो गुणः स्यात्तमाह—

**न सज्जते हेमपाऽङ्गे पद्मपत्रेऽम्बुवद्विषम्।**
**जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः ॥ २८ ॥**

हेम पिबतीति हेमपस्तस्याङ्गे विषं न सज्जते। कथम् ? पद्मपत्रे जलमिव। तस्य च हेमपस्य विस्तीर्णमायुर्जायते। एव विधिर्गरेऽपि स्मृतो यो विष उक्तः। सज्जत इत्यत्रात्मनेपदं चिन्त्यम्।

**विरुद्धमपि चाहारं विद्याद्विषगरोपमम्।**

विरुद्धं चाहारं विषगरोपमं विद्यात्। विषगरवद्विरुद्धाहारा अपि व्याधिमृत्युहेतव इत्यर्थः। तथा चोक्तं सङ्ग्रहे—"विस्फोटगुल्ममदविद्रधिमेहयक्ष्मतेजोबलस्मृतिमतीन्द्रियचित्तनाशम्। कुर्याद्विरुद्धमशनं ज्वरमस्रपित्तमष्टौ गदांश्च महतो विषवच्च मृत्युमिति"।

तदेव विरुद्धभोजनमाह—

**आनूपमामिषं माषक्षौद्रक्षीरविरूढकैः ॥ २९ ॥**
**विरुध्यते सह बिसैर्मूलकेन गुडेन वा।**
**विशेषात्पयसा मत्स्या मत्स्येष्वपि चिलीचिमः ॥ ३० ॥**

आमिषं मांसमानूपं महामृगवारिचरवारिशयाख्यं माषादिभिः सप्तभिः सह विरुध्यते। आनूपेष्वपि मध्ये विशेषादतिशयेन पयसा सह मत्स्या विरुध्यन्ते। यतो मत्स्यक्षीरे स्वादुरसविपाकित्वान्महाभिष्यन्दिनी। शीतोष्णयोगाच्च परस्परविरुद्धे। मत्स्येष्वपि चिलीचिमाख्यो मत्स्यः पयसा सहात्यन्तविरुद्धः। स पुनः शकलीरो लोहिताक्षः सर्वतो लोहितराजिः प्रायो भूमौ चरति। सोऽत्यभिष्यन्दितमत्वात्सुतरां विरुद्धः। एष चाहारोऽनिर्दिष्टविकारकारी यथोक्तान् विस्फोटादीन् करोति। कालान्तरेण च चिकित्सां विना प्राणानपि हरति। कश्चिच्च विरुद्धाहारा निर्दिष्टविकारकारी। यथोपोदिकाऽतिसारायेति।

**विरुद्धमम्लं पयसा सह सर्वं फलं तथा।**

अम्लं द्रव्यं पयसा सह सर्वं विरुद्धम्। सर्वग्रहणं द्रवाद्रवग्रहणार्थम्। द्रवं





काञ्जिकादि। अद्रवं चुक्रिकादिकमित्यर्थः। अन्यथा पयसो द्रवसमानजातीयत्वात्काञ्जिकाद्येव द्रवद्रव्यं विरुध्येत न चुक्रिकादिकमपि। ननु तृतीययैव सहार्थो लब्ध एव। यथा। वाराहं श्वाविधा नाद्यादित्यत्र। ततः किं सहशब्देन? सत्यमेतत्। सहग्रहणं तु नियमार्थम्। सहैकध्यमम्लेनोपयुज्यमानं विरुद्धम्। यदा त्वम्लेन गोरसादिना क्षीरशाकसंज्ञव्यञ्जनकरणार्थं पयः संस्क्रियते, तदा तस्य द्रव्यान्तरत्वापत्तेर्विरोधो नास्ति। तथा दधिक्षीरादिना घृतं पच्यते तत्राऽप्यविरोध एव। द्रव्यान्तरत्वात्। पूर्वस्याऽपि सहशब्दस्यैवं प्रायमेव प्रयोजनमभ्यूह्यमिति। अपि च। क्षीरे भुक्त उत्तरे कालेऽप्यम्लं न भोज्यमिति प्रतिपादनार्थं च सहग्रहणम्। तथा चोक्तं सङ्ग्रहे—"सर्वं चाम्लं पयसा सहैकध्यं तदुत्तरं वा विरुद्धमिति"। फलं तथेति। फलमक्षोडादि च पयसा सह विरुद्धम्। सर्वशब्दः सर्वत्र न सम्बन्धनीयो यतो न सर्वं फलं पयसा सहाभ्यवहर्तुं विरुद्धम्। अपि तु किञ्चिदेव। तथा च मुनिः परिसंख्ययैवाऽपठत्। तथा "आम्राम्रातकलकुचकरमर्दमोचदन्तशठबदरकोशाम्रभव्यजाम्बवकपित्थतित्तिडीकपालेवताक्षोडपनसनालिकेरदाडिमामलकान्येवं प्रकाराणि चान्यानीति"। तस्मान्न सर्वं फलं पयसा सहाभ्यवहर्तुं विरुद्धं किंतु मुन्युक्तमेव।

**तद्वत्कुलत्थवरककङ्गुवल्लमकुष्ठकाः ॥ ३१ ॥**

तद्वदिति। फलवत् कुलित्थादयः पयसा सह विरुद्धाः। वरको व्रीहिभेदः। वरकोद्दालकेति प्रागुक्तेः। वल्लमकुष्ठकौ शिम्बीधान्यविशेषौ। उपलक्षणं चेदम्। माषनिष्पावावपि हि विरुद्धौ पयसा सहेति सङ्ग्रहे कथितम्।

**भक्षयित्वा हरितकं मूलकादि, पयस्त्यजेत्।**

भक्षयित्वेति। हरितकं मूलकं कुठेरादि भुक्त्वा पयस्त्यजेन्न पुनः शाकं भुक्त्वा। मूलकादि स्निग्धस्विन्नं शाकसाधनेन साधितं भुक्त्वा क्षीरं न त्यजेत्। एतस्मादेव च ज्ञापकान्मूलकादीनामुभयरूपत्वं वेद्यम्। मूलकादीनां यदि शाकत्वप्रसिद्धिरेवाऽभविष्यत् ततो हरितकं मूलकादि भक्षयित्वेति तन्त्रकृन्नावक्ष्यत्। तस्मान्मूलकस्य हरितकत्वं च ज्ञेयम्। लशुनेन सह क्षीरस्य प्रयोगो य उक्तः—"साधयेच्छुद्धशुष्कस्य लशुनस्य चतुःपलमिति" स न विरुद्धः। अग्न्यादिसम्पर्काद्द्रव्यान्तरत्वोत्पत्तेः।

**वाराहं श्वाविधा नाद्याद्, दध्ना पृषतकुक्कुटौ, ॥ ३२ ॥**
**आममांसानि पित्तेन, माषसूपेन मूलकम्, ।**
**अविं कुसुम्भशाकेन, बिसैः सह विरूढकम्, ॥ ३३ ॥**
**माषसूपगुडक्षीरदध्याज्यैर्लाकुचं फलम्, ।**
**फलं कदल्यास्तक्रेण दध्ना तालफलेन वा, ॥ ३४ ॥**
**कणोषणाभ्यां मधुना काकमाचीं गुडेन वा, ।**



**सिद्धां वा मत्स्यपचने, पचने नागरस्य वा, ॥ ३५ ॥**
**सिद्धामन्यत्र वा पात्रे कामात्तामुषितां निशाम्, ।**

श्वाविधा सेधामांसेन सह वाराहं मांसं नाद्यात् । अग्रेऽपि नाद्यादिति क्रियायोगो यावत्त्यजेदिति क्रियान्तरम् । पृषतकुक्कुटौ दध्ना सह नाद्यात् । आमान्यपक्वानि मांसानि पित्तेन सह । माषसूपेन सह मूलकम् । अविं मेषं कुसुम्भशाकेन सह । विरूढकमङ्कुरितधान्यं बिसैः सह । माषसूपादीनामन्यतमेन सह लकुचफलम् । कदल्याः फलं तक्रेण सह दध्ना वा तालफलेन वा कदलीफलम् । कणोषणाभ्यां सह काकमाचीम् । केवलेन माक्षिकेण सह काकमाचीं गुडेन वा सह काकमाचीम् । मत्स्याः पच्यन्ते यस्मिन् भाण्डे तत्र वा सिद्धां काकमाचीम् नाद्यात् । नागरस्य वा पचने शुण्ठीपाचितभाण्डे सिद्धां काकमाचीम् । तथाऽन्यत्र वा भाजने यथारुचि सिद्धां कामात्तां काकमाचीं रात्रिमुषितां पर्युषितां नाद्यात् ।

**मत्स्यनिस्तलनस्नेहसाधिताः पिप्पलीस्त्यजेत्, ॥ ३६ ॥**
**कांस्ये दशाहमुषितं सर्पिरुष्णं त्वरुष्करे ।**

मत्स्या निस्तल्यन्ते भृज्यन्ते येन स्नेहेन स मत्स्यनिस्तलनस्नेहस्तत्र साधिताः पिप्पलीस्त्यजेत्, विरुद्धत्वात् । नाद्यादिति प्रकृतेऽपि त्यजेदिति वचनं न केवलं नाद्याल्लेपादिकमपि न कुर्यादिति प्रतिपादनार्थम् । उत्तरत्राऽपि त्यजेदित्यस्यानुवृत्तावेतदेव तात्पर्यम् । कांस्यपात्रे दशरात्रमुषितं सर्पिस्त्यजेत् । दशाहादर्वागपि विरुद्धमेव । अरुष्करे भल्लातकविषय उष्णमन्नपानादिकं त्यजेत् । तथा पेयं नोष्णोपचारेणेत्यर्थेन मद्यस्योष्णं निषिद्धम् । तथोष्णमुष्णार्तमुष्णे च युक्तं चोष्णैरिति माक्षिकस्य । तथा दध्नो नैवाद्यान्निशि नैवोष्णं वसन्तोष्णेत्यादिभिः । तस्मान्मधुमद्यदधिष्वत्युष्णं विरुद्धमित्यत्राऽचार्यो युक्त्या प्रत्यपादयत् । सङ्ग्रहे तु स्पष्टं कृत्वोक्तम् । " मद्यमधुदधिभल्लातकेषु चोष्णमिति " ।

**भासो विरुध्यते शूल्यः, कम्पिल्लस्तक्रसाधितः ॥ ३७ ॥**

भासः पक्षिविशेषः शूल्यो विरुध्यते शूले संस्कृतो भासः कृतबस्तेर्विरुध्यत इत्यर्थः । शूल्य इति शूलात्पाक इति यत् । कम्पिल्लस्तक्रसाधितो विरुध्यते । संग्रहे चातोऽधिकमप्युक्तम् । यथा—" सौवीरेण तिलशष्कुली । क्षीरेण लवणम् । नवनीतेन शाकम् । नवपुराणमामपक्वं चैकध्यम् । तथा सलिलावगाहः सहसोष्णाभितप्तस्य त्वग्दृष्ट्युपघाताय तृष्णाभिवृद्धये च । तथैव पयःपानं रक्तपित्ताय । शरीरेणायस्तस्य सहसाभ्यवहारश्छर्दिषे गुल्माय वा । वाचा त्वायस्तस्य स्वरसादायेति ।"

**ऐकध्यं पायससुराकृशराः परिवर्जयेत् ।**

एकत्र पायससुराकृशरास्त्यजेत् । ऐकध्यमिति एकाद्धो ध्यमुक्तिति ध्यमुञ् ।

**मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ॥ ३८ ॥**



**एकत्र वा समांशानि विरुध्यन्ते परस्परम्।**

मध्वादीनि समांशानि तुल्यप्रमाणानि मिथो विरुध्यन्ते। कथम्? द्वे वा त्रीणि वैकत्र वा सर्वाणि। यथा—मधुसर्पिषी। मधुवसे। माक्षिकतैले। माक्षिकोदके। त्रीणि त्रीणि यथा—मधुसर्पिर्वसेत्येवमादि। ननु यद्येवंविधो विरोध उच्यते तत्कथमगस्त्यलेहे "कुडवं च पृथग्घृतात्। तैलात्सपिप्पलीचूर्णात्सिद्धशीते च माक्षिकादिति" तैलघृतमधूनां तुल्यांशानां प्रयोगः? ब्रूमः। केवलानां मध्वादीनां समांशानामुपयोगो विरुद्धो न तु द्रव्यान्तरसंयोगेन। तेषां संयोगसंस्कारादिवशाद्विशिष्टगुणान्तरोत्पत्तिर्दृष्टा। तस्मादगस्त्यलेहादौ द्रव्यान्तरे संयोगादिवशादविरोध एव।

**भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतः॥ ३९॥**
**मधुपुष्करबीजं च मधुमैरेयशार्करम्।**
**मन्थानुपानः क्षैरेयो हारिद्रः कटुतैलवान्॥ ४०॥**

भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतोऽनुपानेन विरुध्येते। तृतीयार्थे तसिप्रत्ययः। अपिशब्दान्न केवलं समांश इत्यर्थः। मधु माक्षिकं पुष्करबीजं चैकध्यं विरुध्यते। तथा मधु मार्द्वीकं मैरेयं खर्जूरासवं शार्करं शर्करया कृतं मद्यमेकत्रोपयुक्तं विरुध्यते। क्षैरेयः पायसो मन्थानुपानो विरुद्धः। मन्थोऽनुपानं यस्य स एवम्। क्षैरेय इति क्षीराड्ढञ्। हारिद्रः कुप्रसवः शाकविशेषः सार्पच्छत्रानुकारी पीताभासः कटुतैलवान् सर्षपतैलभृष्टो विरुद्धः।

**उपोदिकाऽतिसाराय तिलकल्केन साधिता।**

उपोदिका तिलकल्केन साधिताऽतिसाराय। तादर्थ्ये चतुर्थ्यत्र। अर्थो निमित्तम्। तस्मै इदं तदर्थं तदर्थमेव तादर्थ्यम्। तेनातीसारकरणमित्ययमर्थो जायते।

**बलाका वारुणीयुक्ता कुल्माषैश्च विरुध्यते॥ ४१॥**
**भृष्टा वराहवसया सैव सद्यो निहन्त्यसून्।**

बलाका पक्षिजातिर्वारुण्या प्रसन्नया युक्ता विरुद्धा। कुल्माषैर्नातिस्विन्नमुद्गादिभिश्च सह विरुध्यते। सैव बलाका वराहवसया भृष्टा सद्यस्तत्क्षणादेव प्राणान् मारयति।

**तद्वत्तित्तिरिपत्राढ्यगोधालावकपिञ्जलाः॥ ४२॥**
**ऐरण्डेनाग्निना सिद्धास्तत्तैलेन विमूर्छिताः।**

तित्तिर्यादय ऐरण्डेनाग्निना सिद्धास्तत्तैलेनैरण्डतैलेन विमूर्छिता बहुशो भृष्टास्तद्वद्बलाकावत्सद्यो जीवितहराः। पत्राढ्यो मयूरः।

**हारीतमांसं हारिद्रशूलकप्रोतपाचितम्॥ ४३॥**
**हारिद्रवह्निना सद्यो व्यापादयति जीवितम्।**

हारीतस्य पक्षिविशेषस्य मांसं हारिद्रशूलके प्रोतमासक्तं च तत्पाचितं च हारिद्राग्निना सद्यो जीवितं हन्ति।

**भस्मपांशुपरिध्वस्तं तदेव च समाक्षिकम् ॥ ४४ ॥**

तदेव हारितमांसं भस्मपांशुपरिध्वस्तं समाक्षिकं विरुद्धम् । भस्म च पांशुश्च भस्मपांशू भस्मरेणू ताभ्यां परिध्वस्तं धूसरितम् । सिद्धसारे चोक्तम्--"न जातु कटुतैलेन भृष्टामद्यादुपोदिकाम् । प्रियङ्गुकल्कस्निग्धाङ्गः पायसं न समाचरेदिति" ।

द्रव्याणामानन्त्यात्प्रतिपदोक्त्याऽशेषविरुद्धसङ्ग्रहः कर्तुमशक्य इति तत्सङ्ग्रहार्थं व्यापि लक्षणमाह—

**यत्किञ्चिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः ।**
**विरुद्धं शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ॥ ४५ ॥**

यत्किञ्चिदन्नपानौषधं वा दोषमुत्क्लेश्य स्वस्थानात्सञ्चलय्य न हरेद्बहिर्न निष्कासयेत् तत्समासतः संक्षेपतो विरुद्धम् । शुद्धिरत्रेष्टा । अत्र विरुद्धाहारकृते विकारे शुद्धिर्वमनविरेकादिरूपेष्टा श्रेष्ठा । कुपितदोषसमूहस्य वमनादिभिर्निर्हरणात्तन्निर्हारे चारोग्योत्पत्तिः शमो वेति । न केवलं शुद्धिरिष्टा शमश्चेष्टः । कैः ? तेषां वैरोधिककोपितदोषाणां तत्कृतानां वा विस्फोटादीनां विकाराणां विरोधिभिः प्रतिपक्षभूतैरौषधैः ।

न च शोधनशमनरूप एवोपक्रमोऽत्रेत्याह--

**द्रव्यैस्तैरेव वा पूर्वं शरीरस्याऽभिसंस्कृतिः ।**

तैरेव वैरोधिककुपितदोषप्रतिपक्षभूतैर्द्रव्यैः पूर्वं प्रथमं या शरीरस्याऽभिसंस्कृतिः सा च विरुद्धाहारकृते विकारे प्रशस्तेति । यथा माक्षिकहरीतक्यादिना पित्तश्लेष्महरणौषधेन सन्ततशीलनादभिसंस्कृते देहे पित्तश्लेष्मकरं विरुद्धमुपयुक्तं सद्विकर्तुमशक्तम् । एतदुक्तं भवति—विरुद्धप्रातिपक्षगुणवता द्रव्येण देहस्तथा दार्ढ्यं आहितो यथा विरुद्धमपि द्रव्यं विकारं कर्तुं नाऽलम् ।

**व्यायामस्निग्धदीप्ताग्निवयःस्थबलशालिनाम् ॥ ४६ ॥**
**विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम् ।**

व्यायामो विद्यते येषामित्यर्श आदित्वादच् । वयःस्थास्तरुणाः । बलेन शालितुं श्लाघितुं शीलं येषां ते बलशालिनः । स्निग्धाः स्निग्धवृष्याहारसात्म्याः । व्यायामिनां विरोध्यपि भोजनं न पीडायै न रोगोत्पत्तये । एवं स्निग्धादीनां प्रत्येकं सम्बन्धः कार्यः । केचिद्व्यायामीति पठन्ति । तथा विरुद्धमप्यन्नं यदभ्यासात्सात्म्यं सात्मीभूतं तथाऽल्पमल्पमात्रया च यद्भोजनं तच्च विरुद्धमपि न पीडायै, इति योज्यम् ।

अथ यद्यपथ्यमपि सात्म्यतां प्राप्तं तत्किं त्याज्यं न वा ? कथं च त्याज्यं कथं च पथ्यं भोज्यमित्याह—

**पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत् ॥ ४७ ॥**

अपथ्यमहितमन्नं पानं वा यल्लङ्घनप्लवनजागरणस्वप्नादिकं वा चेष्टितमहितमभ्यस्तं तत्पादेन चतुर्थांशेन त्यजेदहितफलत्वात् । तद्धि शरीरोचितमप्यपथ्यत्वादु-

दर्के दोषाय सम्पद्यते न गुणाय। यदि तु तदपथ्यमभ्यस्तं तथा सात्मीभूतं यस्मिंश्चतुर्थांशेनाऽपि त्यज्यमाने शरीरबाधा शक्यते वह्निमान्द्याद्वा तदा पादपादेन वा षोडशांशेन त्यजेदिति वाशब्दार्थः।

**निषेवेत हितं तद्वदेकद्वित्र्यन्तरीकृतम्।**

तेन तुल्यं वर्तते तद्वत्। तेनैव क्रमेण पादेन पादपादेन वा हितं निषेवेत शीलयेत्। कथमेतद्द्वयमप्यपथ्यरूपं त्याज्यं पथ्यं निषेव्यं चेत्याह। एकेत्यादि। एकश्च द्वौ च त्रयश्च तैरन्तरीकृतम्। एकद्वित्रिभिरन्नकालैर्व्यवधानं कृत्वाऽपथ्यं पादेन पादपादेन वा त्यजेत्। एकद्वित्र्यन्तरीकृतमिति क्रियाविशेषणत्वादत्र नपुंसकलिङ्गत्वम्। अधुनैतदेव स्पष्टीकृत्योच्यते। अपथ्यात्पाटलव्रीह्यादेरभ्यस्तात्पादमेकं त्यक्त्वाऽनुचितात्पथ्याद्रक्तशाल्यादेस्तमेव पादं दत्त्वा चतुष्पात्त्वं सम्पाद्य योज्यम्। एवमन्नकालमेकमतिवाहयेत्। एवं पादेनापथ्यमभ्यस्तं त्यक्तं भवति। पथ्यं चानुचितं निषेवितं भवति। तथा द्वितीयेऽन्नकाले सर्वमपथ्यं योजनीयम्। एवमेकेनान्नकालेनापथ्यपादोऽन्तरीकृतः। ततस्तृतीयेऽप्युचितादपथ्यात्पादद्वयमपास्यानुचितात्पथ्यात्पादद्वयमुपयुज्य ततश्चतुर्थे सर्वमपथ्यं भोज्यं पञ्चमे च। एवमन्नकालद्वयेन पथ्यपादद्वयसहितमपथ्यपादद्वयमन्तरीकृतम्। ततः षष्ठेऽन्नकाले पादमुचितादपथ्यात्पादत्रयमनुचितात्पथ्याद् भुक्त्वा सप्तमाष्टमनवमान्नकालेषु सर्वमपथ्यं भोज्यम्। एवमन्नकालत्रयेणापथ्यमन्तरीकृतम्। ततो दशमेऽन्नकाले सर्वं पथ्यं सेवनीयम्। एवं पादपादेनाप्ययमेव क्रमः। स्पष्टार्थं च दिक्प्रदर्श्यते। तथा यवकादेः षोडशांशं त्यक्त्वाऽनुचिताच्छाल्यादेः पथ्यात्षोडशांशमेव दत्त्वा चतुष्पात्त्वं सम्पाद्य भोज्यम्। एवमपथ्यमभ्यस्तं पादपादेन त्यक्तं भवति पथ्यं चानुचितं निषेवितं भवति। द्वितीयेऽन्नकाले सर्वमपथ्यं सेव्यम्। एवमेकेनापथ्यषोडशांशोऽन्तरीकृतः। ततस्तृतीयेऽप्युचितादपथ्यात्पादपादद्वयमपास्याऽनुचितात्पथ्यात्पादपादद्वयं दत्त्वा चतुष्पात्त्वं सम्पाद्य सेव्यम्। ततश्चतुर्थे पञ्चमे वाऽन्नकाले सर्वमपथ्यं भोज्यम्। एवं कालद्वयेन पादपादद्वयमपथ्यस्यान्तरीकृतम्। ततः षष्ठेऽन्नकालेऽनुचितात्पथ्यात्पादपादत्रयमुचितादपथ्यात्पादपादास्त्रयोदशेति भोज्यम्। ततः सप्तमाष्टमनवमान्नकालेषु सर्वमपथ्यं भोज्यम्। एवं कालत्रयेणान्तरीकृताः। ततो दशमेऽन्नकाले पथ्यादनुचितात्पादपादाश्चत्वारः। अपथ्यपादपादा द्वादशेति भोज्यम्। तत एकादशे सर्वमपथ्यं भोज्यम्। तत एकेनान्नकालेनान्तरीकृतम्। एवमन्नकालद्वयत्रयान्तरितं च तावद्योज्यं यावत्पथ्यस्य षोडशपादाः सेव्यतया सम्पद्यन्ते।

एवमनेन क्रमेणापथ्यदोषास्त्यक्ताः पीडायै न भवन्ति, पथ्यगुणाश्च संवर्धिताः स्थिरतां प्राप्नुवन्तीत्यत आह—

**अपथ्यमपि हि त्यक्तं शीलितं पथ्यमेव वा ॥ ४८ ॥**
**सात्म्यासात्म्यविकाराय जायते सहसाऽन्यथा।**



हि यस्मात्सहसा क्रममिममनालोच्याऽन्यथैवोक्तविध्यतिक्रमेणाऽपथ्यमपि त्यक्तं सात्म्यविकाराय जायते, पथ्यमेव वा सहसा शीलितमसात्म्यविकाराय जायते। सात्म्यासात्म्याभ्यां विकारः सात्म्यासात्म्यविकारस्तस्मै। क्लृपि सम्पद्यमाने चतुर्थीति चतुर्थी।

क्रमेण त्वपथ्यत्यागपथ्यशीलने विधीयमाने गुणाय स्यात्मिति दर्शयति—

**क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः॥ ४९॥**
**नाप्नुवन्ति पुनर्भावमप्रकम्प्या भवन्ति च।**

दोषा अपथ्याभ्यासजाः क्रमेण पूर्वोक्तेनापचिताः क्षयं नीताः, गुणाश्च पथ्योपयोगजाः क्रमेण पूर्वोक्तेनैवोपचिताः वृद्धिं नीताः सन्तः, पुरुषाणां यथासङ्ख्यमपुनर्भावं यान्ति दोषाः, गुणाश्चाऽप्रकम्प्याः स्थिरा भवन्ति।

साम्प्रतमहिताहारसेवनं सदा त्याज्यमिति सयुक्तिं दर्शयति—

**अत्यन्तसन्निधानानां दोषाणां दूषणात्मनाम्॥ ५०॥**
**अहितैर्दूषणं भूयो न विद्वान् कर्तुमर्हति।**

दोषाणामहितैराहारादिभिर्दूषणं कर्तुं विद्वान् पण्डितो नार्हति न युज्यते। किम्भूतानाम्? अत्यन्तमतिशयेन सन्निधानं निकटत्वं येषां दोषाणां त एवं तेषां दूषणात्मनां दूषणस्वभावानाम्।

एतत्प्रसङ्गेन चेदमाह—

**आहारशयनाऽब्रह्मचर्यैर्युक्त्या प्रयोजितैः॥ ५१॥**
**शरीरं धार्यते नित्यमागारमिव धारणैः।**

शयनं स्वप्नः, अब्रह्मचर्यं स्त्रीणां सेवा। अहारादीनां द्वन्द्वः। एतैर्युक्त्या प्रयोजितैः शरीरं सततं धार्यते। किमिव कैः? आगारं गृहमिव धारणैः स्तम्भैर्यथा।

**आहारो वर्णितस्तत्र तत्र तत्र च वक्ष्यते॥ ५२॥**

तत्र तेषु त्रिषु मध्यादाहारो वर्णित ऋतुचर्यायां द्रवान्नस्वरूपविज्ञानीययोः। तत्र तत्र च शास्त्रकारो ज्वरचिकित्सादौ च वक्ष्यति।

शयनाऽब्रह्मचर्ययोस्त्विहैव विधिं वक्तुकाम आह—

**निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाऽबलम्।**
**वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च॥ ५३॥**

निद्रायत्तं निद्राधीनं, सुखमारोग्यं, दुःखं रोगस्तथा पुष्ट्यादि च। न च जीवितमिति संबन्धः। अजीवितेन योगो भवतीत्यर्थः।

साम्प्रतं दुष्टनिद्रां निर्दिशति—

**अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता।**
**सुखायुषी पराकुर्यात्कालरात्रिरिवाऽपरा॥ ५४॥**

अकाले निषेविताऽति च निषेविता नच निषेविता निद्रा, सुखमारोग्यलक्षण-

मायुश्च जीवितं ते सुखायुषी पराकुर्य्यान्नाशयेत्। केव ? अपरा कालरात्रिरिव।

अथ निद्रागुणप्रसङ्गेन तत्प्रतिपक्षभूतस्य जागरणस्याऽपि गुणमाह—

**रात्रौ जागरणं रूक्षं, स्निग्धं प्रस्वपनं दिवा,।**
**अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम्॥ ५५॥**

अपिशब्दावत्र सामर्थ्यलब्धौ बोद्धव्यौ। तेन रात्रावपि जागरणं रूक्षम्। दिवा त्वग्नेयमत्यर्थं रूक्षं कालेनाहितबलत्वात्। तथा प्रस्वपनं दिवाऽपि स्निग्धम्। रात्रौ तु सौम्यकालेऽतिशयेन स्निग्धमित्यवतिष्ठते। अपिशब्दाभ्यामन्तरेण तु रात्रावेव जागरणं रूक्षं दिवा तु स्निग्धमित्यर्थो जायते। व्यवच्छेद्यफलत्वाद्वाक्यानाम्। एवं दिवस एव स्निग्धं प्रस्वपनं रात्रौ तु रूक्षमिति। नचैतद्युज्यते। ततो दिवा जागरणं सदा रूक्ष नाभविष्यत् तत्कथमिदमुपपत्स्यते ? "बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाऽहनि। विषार्तः कण्ठरोगी च नैव जातु निशास्वपीति"। येषां ह्यपतर्पणमेव हितं यच्चापतर्पणं तदवश्यं रूक्षम्। तस्मादपतर्पणस्वभावं जागरणमेव सेव्यम्। तथा—" ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः। दिवास्वप्नो हितोऽन्यस्मिन् कफपित्तकरो हि सः। मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः। क्रोधशोकभयैः क्लान्तान् श्वासहिध्मातिसारिणः। वृद्धबालाऽबलक्षीणक्षततृट्शूलपीडितान्। अजीर्णाभिहतोन्मत्तान् दिवास्वप्नोचितानपि"। तदेतेषां सन्तर्पणार्हत्वात्सन्तर्पणमेव हितम्। यच्च सन्तर्पणं तदवश्यं स्निग्धम्। तस्मादेतैः सन्तर्पणस्वभावमेव सदा प्रस्वपनं सेव्यम्। एवं च पूर्वमेव च व्याख्यानं युक्तम्। प्रस्वप्नजागरणक्रिययोरद्रव्ययोरपि रूक्षस्निग्धत्वमुपचारादुपपन्नम्। यथा रूक्षं द्रव्यं गुग्गुल्वादि कफमेदःप्रभृतीन् सौम्यान् भावान् क्षपयति। तथैव यदा जागरणमपि तत्क्षपयद् दृष्टं, तदा तद्रूक्षकार्यकरणादरूक्षमपि रूक्षमित्युपचर्यते। तथा प्रस्वपनादर्वाक्कफमेदःप्रभृतीनां सौम्यानां भावानां स्वहेतोरुत्पादस्तथा नोपलभ्यते। यथा प्रस्वपनादनन्तरं तस्मात्प्रस्वपनमस्निग्धमपि स्निग्धमित्युपचर्यते। प्रचल इवाचरतीति क्यङन्तान्निष्ठा। आसीनस्योपविष्टस्य प्रचलायितमासीनप्रचलायितं, नतु प्रस्वपनं सर्वसर्विकया। येन स्नेहनहेतुः स्यात्। रूक्षकार्याऽकरणादरूक्षम्। अनभिष्यन्दि तु विशेषेण। आसीनप्रचलायितं पुनरीदृग्रूपमित्यर्थः।

यदि स्निग्धत्वादभिष्यन्दो दिवास्वप्नस्तत्किं कदाचिदपि न कार्य इत्याह—

**ग्रीष्मे वायुचयादानरौक्ष्यराज्यल्पभावतः।**
**दिवास्वप्नो हितोऽन्यस्मिन्कफपित्तकरो हि सः॥ ५६॥**
**मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः।**
**क्रोधशोकभयैः क्लान्तान् श्वासहिध्मातिसारिणः॥ ५७॥**
**वृद्धबालाऽबलक्षीणक्षततृट्शूलपीडितान्।**
**अजीर्णाभिहतोन्मत्तान् दिवास्वप्नोचितानपि॥ ५८॥**

**धातुसाम्यं तथा ह्येषां श्लेष्मा चाऽङ्गानि पुष्यति।**

ग्रीष्मकाले दिवास्वप्नो हितः। यतस्तस्मिन्काले पवनचयो भवति। आदानस्य च परिपुष्टत्वादतिरौक्ष्यं भवति। रात्रयश्च निद्रासमाप्त्ययोग्या अल्पा भवन्ति। दिवास्वप्नश्च सन्तर्पकः। ग्रीष्मादपरस्मिन् काले कफपित्तकरः सः, अचिन्त्यत्वाद्धेतुप्रभावस्य। भाषादिक्लान्तादीन् मुक्त्वा वर्जयित्वा। तेनैतदुक्तं भवति—ग्रीष्मादपरस्मिन्नपि काले स्वप्न एषां हित एव। यानमश्वादि। क्षतः खड्गादिच्छिन्नः। अभिहतो लगुडादिना। स्वप्नोचिताः शीलितदिवास्वप्नाः। तत्र भाष्यादिक्लान्तानां पवनकोपात्स्वप्नोऽनुज्ञातः। श्वासहिध्मादीनां वेगविस्मरणार्थम्। वृद्धादीनां यथायथं सन्तर्पणार्थं वेगविस्मरणार्थं च। अजीर्णिनां दिवास्वप्नोचितानां च धातुवैषम्यपरिहारार्थं दिवास्वप्नोऽनुमतस्तन्त्रकृता। तथा चोक्तम्—"उचितो हि दिवास्वप्नो येषां नित्यं शरीरिणाम्। वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवेति"। नन्वजीर्णिनां दिवास्वप्नो न युक्तो दिवास्वप्नस्य कफवृद्धिकरत्वात्? कफवृद्ध्या चाग्निमान्द्यम्। अग्निमान्द्यादजीर्णान्नस्याऽपाक इत्ययुक्तस्तेषां दिवास्वप्नः। अत्रोच्यते—दिवास्वप्नेनाजीर्णिनां धातुसाम्यं भवति, धातुसाम्ये च सति स्वस्थानस्थितैर्दोषैरनुपहतो वह्निः पचनक्षमो भवति। कफस्तु वृद्धोऽपि नैतेषामग्निमान्द्यं विधत्ते। अपित्वङ्गानां पुष्टिमादधाति। अत एवानन्तरमेवोवाच शास्त्रकारः—"धातुसाम्यं तथा ह्येषां श्लेष्मा चाऽङ्गानि पुष्यतीति"।

**बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाऽहनि॥ ५६॥**
**विषार्तः कण्ठरोगी च नैव जातु निशास्वपि।**

तथा बहुमेदःश्लेष्माणः स्निग्धाहारादिशीलिनश्च ग्रीष्मेऽप्यहनि न स्वप्युः। विषार्तः कण्ठरोगी च रात्रिष्वपि कदाचिदपि न स्वप्यात्।

**अकालशयनान्मोहज्वरस्तैमित्यपीनसाः॥ ६०॥**
**शिरोरुक्शोफहृल्लासस्रोतोरोधाऽग्निमन्दताः।**

अकाले शयनं स्वप्नोऽकालशयनं तस्मादकालशयनान्मोहादयः स्युः। स्तैमित्यं गात्राणां निरुत्साहत्वम्।

अत्र च का चिकित्सेत्याह—

**तत्रोपवास-वमन-स्वेद-नावनमौषधम्॥ ६१॥**
**योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम्।**
**नावनं लङ्घनं चिन्तां व्यवायं शोकभीक्रुधः॥ ६२॥**
**एभिरेव च निद्राया नाशः श्लेष्मातिसंक्षयात्।**

तेष्वकालस्वप्नजेषु रोगेषूपवासाद्यौषधं योजयेत्। निद्रायाश्च बाहुल्येन रात्रिः कालः। तथा चोक्तम्—"लोकादिसर्गप्रभवा तमोमूला तमोमयी। बाहुल्यात्तमसो

रात्रौ निद्रा प्रायेण जायत इति"। अतिनिद्रायां सत्यां तीक्ष्णानि वमनाञ्जननस्यानि योजयेत्, लङ्घनानि च। एभिरेव च तीक्ष्णवमनादिभिर्निद्राया नाशो भवति। श्लेष्माख्यस्य धातोरतिशयेनापचयात्।

सम्प्रति निद्रानाशजान्विकारानाचष्टे—

**निद्रानाशादङ्गमर्दशिरोगौरवजृम्भिकाः ॥ ६३ ॥**
**जाड्यं ग्लानिभ्रमापक्तितन्द्रा रोगाश्च वातजाः।**

निद्रानाशादङ्गमर्दादयो वातोत्थाश्च रोगाः स्युः।

**यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः ॥ ६४ ॥**
**असात्म्याज्जागरादर्धं प्रातः स्वप्यादभुक्तवान्।**

यतश्च सम्यक् सेविताया निद्राया असम्यक् सेविताया श्चाऽनन्तरोक्ता गुणा दोषाः। अतोऽस्माद्धेतोः कालानतिक्रमेण सात्म्यतो यामद्वयं त्रयं वा निशि निद्रां भजेत्। असात्म्याज्जागरादर्द्धेन स्वप्न इष्यते। किन्तर्हि यो यावन्तं कालमुचितं स्वपिति तस्मात्कालादर्धेन प्रातः स्वप्यात्? असात्म्यग्रहणेनैतद् द्योतयति। न सर्वस्य रात्रावसुप्तस्य जागरणकालादर्द्धेन दिवास्वप्न इष्यते किं तर्हि यो यावन्तं कालमुचितं स्वपिति तस्मात्कालाद्यावन्तं कालं निशि जागृयात्तावतोऽर्धेनासौ प्रातः स्वप्यात्। केचिद्धि स्वल्पनिद्राः स्वभावतो भवन्ति। अभुक्तवानभुक्ते सति।

**शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान्दधि ॥ ६५ ॥**
**अभ्यङ्गोद्वर्तनस्नानमूर्धकर्णाक्षितर्पणम्।**
**कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ॥ ६६ ॥**
**मनोनुकूला विषयाः कामं निद्रासुखप्रदाः।**
**ब्रह्मचर्यरतेर्ग्राम्यसुखनिस्पृहचेतसः ॥ ६७ ॥**
**निद्रा सन्तोषतृप्तस्य स्वं कालं नातिवर्तते।**

यो यो मन्दनिद्रः स क्षीरादीन् शीलयेत्। कान्ताबाहुलताश्लेषादयो निद्रासुखहेतुवः। कान्ताबाहुलताश्लेषग्रहणमाश्लेषमात्रमेव निद्रासुखहेतुर्नतु ग्राम्यधर्मसेवेति दर्शनार्थम्। अत एवानन्तरमाह—"ब्रह्मचर्यरतेर्निद्रा स्वं कालं नातिवर्तत इति"। ब्रह्मचर्यरतस्याऽप्यनुगतो मैथुनाभिलाषो निद्रां नाशयेदित्याह। ग्राम्यसुखे निःस्पृहं चेतो यस्य स तस्य। तथा सन्तोषतृप्तस्य।

यदा तु ग्राम्यधर्मेण विना न रतिरपत्यार्थिता वा तदा तदधिकारार्थमुच्यते—

**ग्राम्यधर्मे त्यजेन्नारीमनुत्तानां रजस्वलाम् ॥ ६८ ॥**
**अप्रियामप्रियाचारां दुष्टसंकीर्णमेहनाम्।**
**अतिस्थूलकृशां सूतां गर्भिणीमन्ययोषितम् ॥ ६९ ॥**
**वर्णिनीमन्ययोनिं च गुरुदेवनृपालयम्।**
**चैत्यश्मशानाऽऽयतनचत्वराम्बुचतुष्पथम् ॥ ७० ॥**



**पर्वाण्यनङ्गं दिवसं शिरोहृदयताडनम्।**
**अत्याशितोऽधृतिः क्षुद्वान् दुःस्थिताङ्गः पिपासितः ॥ ७१ ॥**
**बालो वृद्धोऽन्यवेगार्तस्त्यजेद्रोगी च मैथुनम्।**

ग्राम्यधर्मे स्त्रीपुंसयोगविषयेऽनुत्तानां स्त्रियं त्यजेदुत्तानां भेजदित्यर्थः । तथा रजस्वलत्वादियुतां त्यजेत्। दुष्टं व्याधिमलादिभिः सङ्कीर्णं सङ्कुचन्महनं योनिर्यस्यास्ताम्। तथा वर्णिनीं ब्रह्मचारिणीम्। अन्ययोनिमजामहिष्यादिं च त्यजेत्। गुर्वित्यादि। ग्राम्यधर्मनिर्वर्तने गुरुदेवनृपालयांस्त्यजेत् । तथा चैत्यादींस्त्यजेत् । तेषु स्त्रियं न सङ्गच्छेदित्यर्थः। चैत्यादीनां पर्याया दिनचर्यायामुक्ताः । आयतनं दुष्टानां निग्रहस्थानम्। पर्वाणि रविसङ्क्रान्त्यादींस्त्यजेत्। तेषु कामं न सेवेतेत्यर्थः। तथाऽनङ्गम्। अङ्गं जघनम्, नाङ्गमनङ्गमङ्गसदृशं जघनकार्यनिर्वर्तनयोग्यं मुखादिकमुच्यते। दाक्षिणात्या हि मुखेन कुर्वन्ति तन्निषिध्यते। दिवसं च त्यजेत् । दिने रतं न कुर्वीतेत्यर्थः। मूर्धवक्षोभिघातं च त्यजेत्। अत्याशितादयः सुरतं त्यजेयुः। अत्याशितोऽतिभुक्तः। अधृतिर्दुर्मनाः । अन्यवेगार्तः पुरीषादिवेगातुरः । ननु क्षुद्वान् क्षुद्वेगार्त उच्यते । ततोऽन्यवेगार्त इत्यनेनैवाऽस्यार्थस्य लब्धत्वात्, किं क्षुद्वानित्यनेन ? सत्यमेतत् । अतिशयार्थं त्वेतत् । यथा क्षुद्वेगार्तः स्त्रियं गच्छन्नतिशयेन पीडया बाध्यते, न तथाऽन्यवेगार्त इति ।

सम्प्रति ऋतुविशेषे निधुवनं नियमयति।

**सेवेत कामतः कामं तृप्तो वाजीकृतां हिमे ॥ ७२ ॥**
**त्र्यहाद्वसन्तशरदोः पक्षाद्वर्षानिदाघयोः।**

तृप्तो वाजीकरणैः सञ्जातसन्तर्पणः सन् कामतो यथेच्छया हिमे हेमन्तर्तौ शिशिरे च कामं यथेच्छं सेवेत। वाजीकृतामिति सम्पदादित्वात्क्विप् । तृप्त इति क्तोऽधिकरणे च ध्रौव्येत्यादिनाऽधिकरणे क्तः। अधिकरणवाचिनश्चेति षष्ठी। वसन्ते शरदि च त्र्यहात् त्र्यहमतिक्रम्य मैथुनं निषेवेत। वर्षाग्रीष्मयोः पक्षात् कामं भजेत्।

**भ्रमक्लमोरुदौर्बल्यबलधात्विन्द्रियक्षयः ॥ ७३ ॥**
**अपर्वमरणं च स्यादन्यथा गच्छतः स्त्रियम्।**

अन्यथोक्तविधेरन्येन प्रकारेण स्त्रियं गच्छतो भ्रमादयः स्युः । अपर्वण्यकाले मरणमपर्वमरणम्।

**स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोबलैः।**
**अधिका मन्दजरसो भवन्ति स्त्रीषु संयताः ॥ ७४ ॥**

स्त्रीषु संयताः स्त्रीः सम्यक् सेवमानाः, स्मृत्यादिभिरधिका अल्पजराश्च भवन्ति।

**स्नानानुलेपनहिमानिलखण्डखाद्यशीताम्बुदुग्धरसयूषसुराप्रसन्नाः।**
**सेवेत चानुशयनं विरतौ रतस्य तस्यैवमाशु वपुषः पुनरेति धाम॥७५॥**

रतान्ते यथौचित्येन स्नानादीन् सेवेत। खण्डखाद्यं खण्डकृतं कणिकेत्यादि ।

रसो मांसरसः । चानुशयनमिति । अनु पश्चाच्च स्वप्नं सेवेत । तस्य स्नानादिसेविनः शरीरस्य एवमस्मिन्कृते धाम तेजो भूय आगच्छति । " त्भौजौ वसन्ततिलकं गुरुकद्वयं च " " स्नानाङ्गरागव्यजनेन्दुपादयूषासवक्षीररसान् रसालाम् । भक्षान् सिताढ्यान् सलिलं सुशीतं सेवेत निद्रां च रतान्ततान्त इति " ।

एतच्च पूर्वोक्तं हिताहितं सर्वं वैद्य एव वेत्ति, तस्माद्वैद्ये सर्वथा शरीरं राज्ञा निवेद्यमिति दर्शयन्नाह—

**श्रुतचरितसमृद्धे कर्मदक्षे दयालौ**
**भिषजि निरनुबन्धं देहरक्षां निवेश्य ।**
**भवति विपुलतेजःस्वास्थ्यकीर्तिप्रभावः**
**स्वकुशलफलभोगी भूमिपालश्चिरायुः ॥ ७६ ॥**

भिषजि शरीररक्षणं निरनुबन्धं निर्विकल्पमाधाय बहुकालमात्मीयश्रेष्ठफल-भोगवान्, तथा तेजश्च, स्वास्थ्यं च, कीर्तिश्च, प्रभावश्च, एवं विपुला विस्तीर्णा-स्तेजःस्वास्थ्यकीर्तिप्रभावा यस्य स एवंविधः । कीदृशे भिषजि । श्रुतं शास्त्रावबोधः । चरितमाचारः । ताभ्यां समृद्धे सम्पूर्णे । तथा क्रियाचतुरे । तथा कृपालौ । " वसु-मुनिविरतिश्चेन्मालिनी नौ मयौ यः " ।

इति श्रीमद्वाङ्कदत्तपुत्र श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दरा-ख्यायामन्नपानरक्षाध्यायः सप्तमः ॥ ७ ॥

# अष्टमोऽध्यायः ।

अन्नरक्षाऽध्यायानन्तरं मात्राशितीयो युक्तः । यतो विषादिभ्यो रक्षितमन्नपानं हीनमात्राभ्यवहृतं जीवितोपघाताय सम्पद्यते । मात्राभ्यवहृतं प्राणिनां प्राणाय ।

**अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ।**

अथेत्यानन्तर्ये । यथा—" अथाऽतो धर्मजिज्ञासेति " वेदाध्ययनादनन्तरं धर्मो जिज्ञासितव्य इत्यर्थः । ' अतः ' इति प्रस्तुताभिसम्बन्धे । अशशनम-शितम् । भावे निष्ठा । मात्रयाऽशितं तस्मै हितो मात्राशितीयः । शेषं पूर्व-वद्व्याख्येयम् ।

**मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका ।**
**मात्रां द्रव्याण्यपेक्षन्ते गुरूण्यपि लघून्यपि ॥ १ ॥**

सर्वकालं स्वस्थ आतुरो वा मात्राशी स्यात्, परिमिताशी भवेत् । कुतो हेतोः ? हि यस्मान्मात्राऽग्नेः प्रवर्तिका, स्वव्यापारे अग्निप्रवृत्तिश्च देहस्थितिहेतुः । तथा चोक्तम्–"अग्निमूलं बलं पुंसां बलमूलं हि जीवितमिति " । तस्मान्मात्रायाः प्राधान्यम् । यस्माच्च कारणान्मात्रायाः प्राधान्यं, ततो मात्रां द्रव्याण्यपेक्षन्ते

गुरूण्यपि लघूनि च। तत्र गुरूणि पिष्टक्षीरद्राक्षाऽक्षोडेक्षुमाषानूपमांसादीनि। लघूनि दिव्योदकरक्तशालिषष्टिकमुद्गलावकपिञ्जलैणशशशम्बरादीनि ।

तत्र गुरूणां का मात्रा का लघूनामित्याह—

**गुरूणामर्धसौहित्यं लघूनां नातितृप्तता ।**
**मात्राप्रमाणं निर्दिष्टं सुखं यावद्विजीर्यति ॥ २ ॥**

गुरूणां द्रव्याणामर्द्धसौहित्यमर्धतृप्तिः । लघूनां नातितृप्तता नातितृप्तिः । किं तर्हि सौहित्यमात्रम् ? एतन्मात्राप्रमाणं निर्दिष्टम् । मात्रा ह्रस्वा मध्या बृहती च, तस्याः प्रमाणम् । तत्र प्रमाणं मानम् । तस्यास्तु प्रमाणमुन्मानम् । एवं चात्र मात्राशब्दस्यापौनरुक्त्यम् । हि यस्मात्, तावत् परिमाणमभ्यवहृतं सुखमविकृतिं कृत्वा परिणमति । एतद्विपर्ययेण हीनमात्रं भोजनं वर्ज्यं दोषदर्शनात् ।

यथा चाह—

**भोजनं हीनमात्रं तु न बलोपचयौजसे ।**
**सर्वेषां वातरोगाणां हेतुतां च प्रपद्यते ॥ ३ ॥**

हीनमात्रं पुनरशनं न बलाय, नोपचयाय, न चौजसे । सर्वेषां वातरोगाणां कारणतां याति ।

**अतिमात्रं पुनः सर्वानाशु दोषान् प्रकोपयेत् ।**

अतिमात्रं त्वशनं त्रीनपि दोषान् शीघ्रमेव प्रकोपयति ।

कुपिताश्च त्रयो दोषा अलसकाख्यं विषूचिकाख्यं वा व्याधिं यथा कुर्वन्ति तथा दर्शयति—

**पीड्यमाना हि वाताद्या युगपत्तेन कोपिताः ॥ ४ ॥**
**आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ।**
**विष्टम्भयन्तोऽलसकं च्यावयन्तो विषूचिकाम् ॥ ५ ॥**
**अधरोत्तरमार्गाभ्यां सहसैवाऽजितात्मनः ।**

तेनापक्वेनाहारेण दुष्टेन वाताद्या हि यस्मात्पीड्यमाना विबध्यमाना रुद्धमार्गत्वादत एव युगपदेककालं सर्व एव कोपितास्तदेव दुष्टमन्नमाविश्याऽलसकं कुर्वते । किं कुर्वन्तः ? विष्टम्भयन्तस्तदेव दुष्टमन्नं स्रोत सु रुन्धानाः । तथाऽधरोत्तरमार्गाभ्यां सहसैवानुचिते देशे काले च्यावयन्त ऊर्ध्वमधश्च निष्कर्षयन्तः । अजितात्मनोऽसंयतचेतसो मनुजस्य विषूचिकां कुर्वते ।

एतदेव सविस्तरमाह—

**प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते ॥ ६ ॥**
**आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः ।**

ऊर्ध्वं मुखेनाहारो न प्रयाति, न चाधस्ताद् गुदेन प्रयाति, न चाहारः पच्यते । आमाशये="नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः," तस्मिन्नलसीभूत इवा-

लसीभूतः । यथाऽकर्मशीलः पुरुषोऽलस इत्युच्यते, तथाऽयमाहारोऽलसीभूतस्तिष्ठति, तेन हेतुना स रोगोऽलसकः स्मृतः ।

विषूचिकायास्तु निर्वचनमाह—

**विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः ॥ ७ ॥**
**सूचीभिरिव गात्राणि विध्यतीति विषूचिका ।**

वाय्वादीनां त्रयाणामत्यन्तप्रकोपान्नानाप्रकारैर्वेदनोद्भेदैः पीडोत्पादैर्यस्माद्गात्राणि सूचीभिरिव विध्यति तस्माद्विषूचिकेत्युच्यते । विविधानां विकाराणां सूचिका विसूचिका विषूचिकेत्युच्यते ।

**तत्र शूलभ्रमाऽऽनाहकम्पस्तम्भादयोऽनिलात् ॥ ८ ॥**
**पित्ताज्ज्वरातिसारान्तर्दाहतृट्प्रलयादयः ।**

वातादधिकाच्छूलादयो भवन्ति । आदिशब्देनाङ्गोद्वेष्टनमुखशोषादिपरिग्रहः । पित्ताद् वृद्धाज्ज्वराद्याः स्युः । प्रलयो मूर्च्छाप्रायः । आदिशब्देन मदादिपरिग्रहः ।

**कफाच्छर्द्यङ्गगुरुतावाक्सङ्गष्ठीवनादयः ॥ ९ ॥**

कफादधिकाच्छर्द्यादयो भवन्ति । आदिशब्देन क्षवथ्वादीनां ग्रहणम् ।

**विशेषाद् दुर्बलस्याऽल्पवह्नेर्वेगविधारिणः ।**
**पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमन्तरा ॥ १० ॥**
**अलसं क्षोभितं दोषैः शल्यत्वेनैव संस्थितम् ।**
**शूलादीन्कुरुते तीव्रांश्छर्द्यतीसारवर्जितान् ॥ ११ ॥**
**सोऽलसः,**

दुर्बलत्वादियुक्तस्य यन्मारुतेन विशेषादन्नं पीडितमन्तराऽऽमाशयमध्य एव श्लेष्मणा रुद्धमलसीभूतं, तथा दोषैः क्षोभितमाकुलितमत एवाऽतिपीडाकारित्वाच्छल्यरूपत एव स्थितं, तीव्रान् दुःसहान् शूलादीन् छर्द्यादिवर्जितान् कुरुते । छर्द्यतीसाराभ्यां विसूचिकोक्ता । सोऽलससंज्ञो रोगः । दुर्बलो ह्यनुपचितधातुः, स न कदाचिदाहारं सोढुं शक्तः । अल्पाग्नेश्चाहारं सम्यङ्न जीर्यति । यतो वेगधारणशीलस्य प्रतिहतो वायुर्विमार्गग. पित्तकफावपि विमार्गगौ कुरुत इत्येतद्विशेषेण निर्देशः ।

दण्डकालसकं लिलक्षयिषुराह—

**अत्यर्थदुष्टास्तु दोषा दुष्टाऽऽमबद्धखाः ।**
**यान्तस्तिर्यक्तनुं सर्वां दण्डवत्स्तम्भयन्ति चेत् ॥ १२ ॥**
**दण्डकालसकं नाम तं त्यजेदाशुकारिणम् ।**

अतिशयेन दुष्टा दोषास्तथा दुष्टाऽऽमेन बद्धानि पूर्णानि खानि स्रोतांसि यैस्ते दुष्टाऽऽमबद्धखाः । तथा तिर्यग्गच्छन्तः, तनुं सर्वां=शरीरं सकलं, दण्डवद्यदि स्तम्भयन्ति=प्रसारणाकुञ्चनरहितं कुर्वन्ति,तदा दण्डकालसको नाम रोगो भवति । तं दण्डकालसकं त्यजेन्नोपक्रमेत् । यत आशुकारिणमाशु=शीघ्रं, स्वकर्म=मारणं, करोतीत्याशुकारी, क्षिप्रं हन्तीत्यर्थः ।

सम्प्रत्याऽऽमविषं निर्दिशति ।

**विरुद्धाध्यशनाजीर्णशीलिनो विषलक्षणम् ॥ १३ ॥**
**आमदोषं महाघोरं वर्जयेद्विषसंज्ञकम् ।**
**विषरूपाशुकारित्वाद्विरुद्धोपक्रमत्वतः ॥ १४ ॥**

विरुद्धं प्रागुक्तं 'विरुद्धमपी'त्यादिना । 'विद्यादध्यशन'मित्यादिनाऽध्यशनम् । अजीर्णं च त्रिविधं वक्ष्यति । एतानि शीलितुं शीलं यस्य तस्य पुंसो य आमदोषो विषलक्षणलालादिलक्षणयुक्तो महाघोरोऽतिकष्टो विषाख्यो भवति, तं न चिकित्सेत् । कुतः ? विषरूपत्वादाशुकारित्वाद्विरुद्धोपक्रमत्वाच्च । विषसदृशस्वरूपत्वाद्विषे शीतोपक्रमो युक्तः, आमे चोष्णोपक्रमो युक्त इति विरुद्धोपक्रमत्वम् ।

अलसकोपक्रमं निर्दिदिक्षुरिदमाह—

**अथाऽऽममलसीभूतं साध्यं त्वरितमुल्लिखेत् ।**
**पीत्वा सोग्रापटुफलं वार्युष्णं योजयेत्ततः ॥ १५ ॥**
**स्वेदनं फलवर्तिं च मलवातानुलोमनीम् ।**
**नाम्यमानानि चाङ्गानि भृशं स्विन्नानि वेष्टयेत् ॥ १६ ॥**

अथेत्यानन्तर्ये । पूर्वोक्तं साध्याऽसाध्यमवगम्याऽनन्तरमामं साध्यमदुष्टं सन्तं त्वरितं द्रागातुर उल्लिखेदुद्वमेदित्यर्थः । किंविधमामम् ? अलसीभूतम् । अलसलक्षणतां गतमुल्लिखेदित्याह । पीत्वेत्यादि । वचालवणमदनफलयुक्तं जलमुष्णं पीत्वा वमेदित्यर्थः । ततोऽनन्तरं स्वेदनं योजयेत् । तथा—" विपाच्य मूत्राम्लमधूनि दन्तीपिण्डीतकृष्णाबिडधूमकुष्ठैः । वर्तिं कराङ्गुष्ठनिभां घृताक्तां गुदे रुजानाहहरीं विदध्यादित्यादि " फलवर्तिं च मलवातानुलोमनीं योजयेत् । तत्रामदोषे दोषवशादङ्गानि च नाम्यमानानि सङ्कोच्यमानानि सन्त्यत्यर्थं स्विन्नानि वस्त्रादिना वेष्टयेत् ।

**विसूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ।**
**तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत् ॥ १७ ॥**

विसूच्यां पूर्वोक्तलक्षणायामतिवृद्धायां सत्यां पार्ष्ण्योः खुरिकयोरयःशलाकादिना दाहः प्रशस्यते । तदहर्विसूचिकावन्तमुपवास्य लङ्घयित्वा विरिक्तवत्पेयादिक्रमेणोपाचरेत् । सुश्रुते चोक्तम्—" सुच्छर्दितविरिक्तस्य गात्रायामेऽतिदारुणे । भल्लातकमधूच्छिष्टसीसपिण्याकनागरैः । घृततैलं पचेत् साम्लैस्तच्च खल्लीघ्नमुत्तमम् । त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः । उद्वर्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वं च तदर्थकारि । शिरीषनक्ताह्वफणिज्जबीजत्रायन्त्यपामार्गफलानि वर्तिः । बस्तस्य मूत्रेण विसूचिकाघ्नी प्रलेपनस्याञ्जनधूमयोगैरिति " ।

---

मौ० टि०—१ विरुद्धमपि चाहारं विद्याद्विषगरोपमम् । अष्टा. सू. ७ अ. २६ श्लो.
२ विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम् । अष्टा. सू. ८ अ. ३४ श्लोके ।

**तीव्रार्त्तिरपि नाऽजीर्णी पिबेच्छूलघ्नमौषधम्।**
**आमसन्नोऽनलो नाऽलं पक्तुं दोषौषधाशनम्॥ १८॥**
**निहन्यादपि चैतेषां विभ्रमः सहसाऽऽतुरम्।**

अजीर्णी तीव्रशूलोऽपि सन्, शूलहरमौषधं न पिबेत्। वमनकरमुष्णोदकं च प्रागुपदिष्टमेव पिबेदित्यर्थः। शूलघ्नमित्युपलक्षणार्थम्। छर्द्यतीसारघ्नमपि विसूचिकायां न पिबेत्। यत आमेन सन्नो मन्दीभूतोऽग्निर्दोषौषधाशनं पक्तुं न समर्थः। एतेषां च दोषौषधाशनानां त्रयाणां सम्बन्धी यो विभ्रमो व्यापत्तिः सहसा कालमनपेक्ष्य चातुरं हन्यात्। न केवलमिदं गुणाय सम्पद्यते प्रत्युत दोषं करोतीति सूचनार्थमपि चेति कृतम्।

कदौषधं युञ्जीतेत्याह—

**जीर्णाशने तु भैषज्यं युञ्ज्यात् स्तब्धगुरूदरे॥ १९॥**
**दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च।**

जीर्णमशनं यस्य तस्मिन्नौषधं युञ्ज्याद्वैद्यः। कीदृशि? स्तब्धमचलं गुरूदरं कोष्ठो यस्य तस्मिन्। किमर्थमौषधं युञ्ज्यादित्याह? दोषेत्यादि गतार्थम्।

कीदृशमौषधं योज्यमित्याह—

**शान्तिरामविकाराणां भवति त्वपतर्पणात्॥ २०॥**
**त्रिविधं त्रिविधे दोषे तत्समीक्ष्य प्रयोजयेत्।**

तुरवधारणे। यस्मादपतर्पणादेवाऽऽमजातानां विकाराणामालस्यजाड्याग्निमान्द्यादीनां शान्तिरुपशमो भवति, तस्मादपतर्पणं योजयेत्। वक्ष्यति हि—"मेहामदोषातिस्निग्धेत्यारभ्य यावल्लङ्घयेन्नित्यमिति"। तस्मादपतर्पणं समीक्ष्य देशकालाग्न्यादीन् पर्यालोच्य त्रिप्रकारं त्रिप्रकारे दोषे वैद्यः प्रयोजयेत्।

सम्प्रत्येतदेव यथायोगमाह—

**तत्राल्पे लङ्घनं पथ्यं, मध्ये लङ्घनपाचनम्,॥ २१॥**
**प्रभूते शोधनं, तद्धि मूलादुन्मूलयेन्मलान्।**

तत्र तेषु त्रिषु मध्येऽल्पे दोषे लङ्घनमुपवासाख्यं पथ्यम्। तेन ह्यनलानिलवृद्ध्याऽल्पो दोषः शीघ्रं संशोष्य जीयते। मध्ये दोषे लङ्घनं पाचनं च पथ्यम्। अग्निः पचति तस्य पचतो ये विबन्धादयो भवन्ति तान्निषिध्य पाटवमादधानं पचेति प्रयुङ्क्त इव तत् पाचयतीति पाचनमुच्यते। हेतुमण्णिजन्तात्पचेर्बाहुलकात्कर्तरि ल्युट्। यदुपयुक्तमन्नपानौषधमपक्वानां सामानां धातूनां पाचने समर्थं तत् पाचनमित्यर्थः। प्रभूते शोधनं पथ्यम्। शोधनं तु कायाद्बहिर्दोषानीरयति। वक्ष्यति हि—"यदीरयेद्बहिर्दोषान्पञ्चधा शोधनं तु तदित्यादि"। कुतः? प्रभूत आमदोषे शोधनं हितमित्याह। तद्धीत्यादि। हि यस्मात्तच्छोधनं मूलान्मलान्नाशयेत्। सङ्ग्रहेऽप्युक्तम्—"बहुदोषाणां पुनर्दोषावसेचनमेव कार्यं नह्य-

स्राविते पल्वलोदकौघे शाल्यादिपुष्टिर्भवतीति "।

**एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् ॥ २२ ॥**
**चिकित्सेदनुबन्धे तु सति हेतुविपर्ययम्।**
**त्यक्त्वा यथायथं वैद्यो युञ्ज्याद्व्याधिविपर्ययम् ॥ २३ ॥**

यथा सन्तर्पणोत्थ आमदोषो निदानविपर्ययाच्चिकित्स्यते। एवमन्यानपि ज्वरादीन् विकारान् स्वनिदानविपर्ययाच्चिकित्सेत्। सन्तर्पणोत्थोऽपतर्पणेन शीतोत्थ उष्णेनेत्यादि। यदि त्वेवमुपक्रम्यमाणो व्याधिरनुबध्यते=तेनोपशमं न गच्छेत्, ततो हेतुविपर्ययं त्यक्त्वा व्याधिविपर्ययं युञ्ज्यात्। किंभूतम्? यथायथं यद्यस्य ज्वरादिव्याधेर्भैषज्यं वक्ष्यमाणं तत्प्रयुञ्जीतेत्यर्थः। यथा 'मुस्तापर्पटकं ज्वरे, रजनी प्रमेह इति'।

न च हेतुव्याधिविपर्ययोरेव चिकित्सायामुपयोग इति दर्शयन्नाह—

**तदर्थकारि वा पक्वे दोषे त्विद्धे च पावके।**
**हितमभ्यञ्जनस्नेहपानबस्त्यादि युक्तितः ॥ २४ ॥**

तन्निदानव्याधिविपर्ययाऽसाध्यमर्थं रोगोपशमलक्षणं कर्तुं शीलं यस्य तत्तदर्थकारि तद्वा युञ्ज्यात्। यथा मदात्यये मद्यपानम्, अतिसारे विरेचनमिति। वाशब्दः समुच्चयार्थ इति। विविधमौषधं निर्दिश्याऽऽमचिकित्साभेवानुसरन्नाह। पक्वे दोषे निरामे दीप्ते पावके च निरामत्वे दीप्ताग्नित्वे च समचितमेव हितमभ्यञ्जनादिकम्। युक्तितो मात्रया यथाऽग्निसादादि न भवतीति।

अजीर्णं लक्षयितुमाह—

**अजीर्णे च कफादामं तत्र शोफोऽक्षिगण्डयोः।**
**सद्यो भुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवम् ॥ २५ ॥**

अग्निप्रतिपक्षत्वेन कफस्याऽजीर्णकरणप्राधान्यादग्रे निर्देशः। कफात्सकाशादजीर्णमामसंज्ञकं भवति। तत्रामाख्येऽजीर्णेऽक्षिकूपयोर्गण्डयोः शोफो भवति। सद्योभुक्तवदप्राप्तविदाहावस्थ उद्गारः। प्रसेकः प्रसक्तं निष्ठीवनम्। उत्क्लेशो दोषाणां स्थानाच्चलनम्। गौरवं गात्राणाम्।

**विष्टब्धमनिलाच्छूलविबन्धाऽऽध्मानसादकृत्।**

अनिलाद्विष्टब्धं नामाजीर्णं भवति। तच्च शूलादिकृत्।

**पित्ताद्विदग्धं तृण्मोहभ्रमाऽम्लोद्गारदाहवत् ॥ २६ ॥**

पित्ताद्विदग्धं नामाऽजीर्णमुत्पद्यते। तच्च तृडादियुक्तम्। त्रिविधस्यैवास्य चिकित्सामाह—

**लङ्घनं कार्यमामे तु विष्टब्धे स्वेदनं भृशम्।**
**विदग्धे वमनं, यद्वा यथावस्थं हितं भवेत् ॥ २७ ॥**

सुरवधार्णे। आमाख्येऽजीर्णे लङ्घनमेव कार्यं, न वमनविरेचनादि। विष्टब्धे

स्वेदनं भृशं कार्यम् । भृशशब्देनैतद् द्योतयति । पूर्वत्राऽपि स्वेदनं कार्यमत्र त्वत्यर्थमिति । विदग्धे विदग्धनाम्न्यजीर्णे वमनं कार्यम् । यद्वा लङ्घनस्वेदनवमनानां यथावस्थं यथादोषोद्रेकं हितं भवेत्तदेव कार्यम् । आमाजीर्णेऽपि स्वेदनवमने विदग्धेऽपि लङ्घनस्वेदने इति ।

**गरीयसो भवेल्लीनादामादेव विलम्बिका ।**
**कफवातानुबद्धाऽऽमलिङ्गा तत्समसाधना ॥ २८ ॥**

गरीयसः प्रभूतादजीर्णादेव विलम्बिका स्यात् । कीदृशात् ? लीनादत्यर्थं स्रोतःसु श्लिष्टत्वात् । लीनादिति 'लीङ्श्लेषणे' इत्यस्य क्तप्रत्यये स्वादय ओदित इत्योदितश्चेति निष्ठानत्वम् । सा च श्लेष्मवायुभ्यामनुबद्धा युक्ता भवति । आमं नाम यदजीर्णं तत्सदृशलक्षणा । यथा—"शोफोऽक्षिगण्डयोः । सद्यो भुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवमिति" । तेनामेन समं तुल्यं साधनं चिकित्सा यस्याः सैवम् । लङ्घनं कार्यमाम इति ।

जीर्णेऽप्याहारे कदाचिदाहारसारो रसोऽजीर्णः स्यात् । तल्लक्षणार्थमाह—

**अश्रद्धा हृद्व्यथा शुद्धेऽप्युद्गारे रसशेषतः ।**
**शयीत किञ्चिदेवात्र सर्वश्चाऽनाशितो दिवा ॥ २९ ॥**
**स्वप्यादजीर्णी सञ्जातबुभुक्षोऽद्यान्मितं लघु ।**

रसशेषेऽश्रद्धाऽन्नानभिलाषः । हृद्व्यथा हृदयशूलं, गौरवं च । शुद्धेऽप्युद्गारेऽन्नसम्बन्धिनि । तेनाजीर्णादर्थान्तरभूत एवायं रसशेषः । अतश्च रसस्य रुधिरादिहेतोरसम्यक्परिपाक इत्यर्थः । तच्चिकित्सामाह—शयीतेत्यादि । अत्र रसशेषे किञ्चिदेव स्तोकमात्रमेव स्वप्यात्, नाजीर्ण इव प्रभूतम् । सर्वश्चाऽजीर्ण्यनाशितो दिवा शयीत । आलाघवात् । यदा चोत्पन्नक्षुत्स्यात्तदा स्तोकं लघु चाद्यात् । आशः कृतो येनाऽऽशितः । न आशितोऽनाशितः । अभुक्तवानित्यर्थः । ननु—अजीर्णिभिर्हतोन्मत्तान्" इत्यनेनैव वाक्येनाऽजीर्णिनां दिवास्वप्नोऽनुज्ञात एव, तत्किं पुनरुक्तेन ? ब्रूमः । विशेषार्थं वाक्यमिदम् । अभुक्तो दिवा स्वप्यादजीर्णीति । तत्र तु सामान्यम् । अशितानशितचिन्ता न कृतेति युक्ता पुनरिहोक्तिः ।

सामान्यमजीर्णलक्षणं सामान्येन ब्रूते—

**विबन्धोऽतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढता ॥ ३० ॥**
**अजीर्णलिङ्गं सामान्यं विष्टम्भो गौरवं भ्रमः ।**

विबन्धो मूत्रपुरीषयोरप्रवृत्तिलक्षणः । अतिप्रवृत्तिस्तयोरेव । ग्लानिः शरीरस्य म्लानता । मारुतमूढता वातस्य प्रतिलोमता । विष्टम्भः कुक्षेराध्मानम् । गौरवं गुरुगात्रत्वम् । भ्रमो मोहः । एतत्सामान्यमजीर्णलक्षणम् । उक्तं च—

मौ० टि० १–अष्टा० सू० ७ अ० ५८ श्लोकार्द्धोऽयम् । २ अस्मिन्नेव श्लोकार्द्धे ।

" सीदत्यङ्गं भ्रमो मोहः कोष्ठे मुह्यति मारुतः । सर्वेषामप्यजीर्णानामविसंवादि लक्षणम् ।"

साम्प्रतमजीर्णस्याऽन्यान्यपि कारणान्याह ।

**न चातिमात्रमेवान्नमामदोषाय केवलम् ॥ ३१ ॥**
**द्विष्टविष्टम्भिदग्धाऽऽमगुरुरूक्षहिमाऽशुचि ।**
**विदाहि शुष्कमत्यम्बुप्लुतं वाऽन्नं न जीर्यति ॥ ३२ ॥**

अतिमात्रमेव भुक्तमन्नं न केवलमामदोषाय । किं तर्हि द्विष्टादि चान्नं न जीर्यति । द्विष्टमप्रियम् । विष्टम्भि कुक्ष्याध्मानकारि । हिममतिशीतम् । अशुच्युच्छिष्टं केशादिदूषितं च । एतच्चाचिन्त्यप्रभावत्वादामदोषहेतुः । विदाहि प्रागुक्तम् । शुष्कमद्रवप्रायम् । अत्यम्बुप्लुतमतिजलेन प्लावितम् ।

**उपतप्तेन भुक्तं च शोकक्रोधक्षुदादिभिः ।**

चः समुच्चये । न केवलं द्विष्टाद्यन्नं भुक्तं न जीर्यति यावता शोकादिभिश्चोपतप्तेन भुक्तं न जीर्यति । शोक इष्टविपत्त्यादिना मनोदौःस्थ्यम् । क्रोधो रोषः । क्षुद् बुभुक्षा । तदुपतप्तत्वं कालातिक्रमत्वात् । आदिशब्देन लोभभयादिपरिग्रहः ।

सम्प्रत्यपरमप्यन्नमामक्षोभकरमाह—

**मिश्रं पथ्यमपथ्यं च भुक्तं 'समशनं' मतम्, ॥ ३३ ॥**
**'विद्यादध्यशनं' भूयो भुक्तस्योपरि भोजनम्, ।**
**अकाले बहु चाल्पं वा भुक्तं तु 'विषमाशनम्', ॥ ३४ ॥**
**त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति वा ।**

पथ्यं शाल्यादि । अपथ्यं यवकादि । तन्मिश्रमेकीकृत्य भुक्तं समशनमभिमतमस्मिन्वैद्यकतन्त्रे । विद्यादित्यादि । भुक्तस्याऽभ्यवहृतस्योपरि यद्भोजनं तदध्यशनं जानीयात् । नन्वेवं प्रातराशे कृते यः सायमाशस्तस्याऽध्यशनत्वं प्रसज्यते ? अध्यशनं च विवर्ज्यमेव यतोऽनन्तरमेव पठिष्यति । त्रीण्यप्येतानि मृत्युं वेत्यादि । वैद्यकतन्त्रेषु च नराणां द्विराहार उपदिष्टः । भगवान् व्यासोऽप्यवोचत्—"सायंप्रातर्मनुष्याणां भोजनं विधिनिर्मितमिति" । तस्मादध्यशनस्यैवं तदसमीचीनं लक्षणम् । अत्र सञ्चक्ष्महे—प्राग्भुक्तस्योपरि समनन्तरमेव वह्नावविभक्ते यदशनं तदेवाध्यशनं नान्यत् । अतएव सुश्रुतो ब्रूते—"प्राग्भुक्ते त्वविभक्तेऽग्नौ द्विरन्नं न समाचरेदिति" । तस्मात् प्रातराशे कृते सत्यग्नौ विभक्ते यः सायमाशः स न परिहार्यः, अपि तु कार्य एव । गुणावहत्वात् । एतदेव प्रतिपादयितुं सङ्ग्रहेऽध्यगीष्ट—'प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति । अजीर्णे सायमाशे तु प्रातराशो हि दुष्यति । दिवा प्रबोध्यतेऽर्केण हृदयं पुण्डरीकवत् । तस्मिन्विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्वशः । व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः । न क्लेदमुपगच्छन्ति दिवा तेनाऽस्य धातवः । अक्लिन्नेष्वन्नमासक्तमन्यत्तेषु न दुष्यति । अविदग्धेष्विव पयः-

स्त्वन्यत्सम्मिश्रितं पयः । रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च । यान्ति कोष्ठे परिक्लेदं संवृते देहधातवः । क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति। विदग्धेषु पयः-स्वन्यत्पयस्तप्तेष्विवार्पितम् । नैशे तस्मादजीर्णेऽन्ने नान्यद् भुञ्जीत भोजनमिति ।" अधिशब्दोऽत्रोपरिशब्दार्थः । यथा प्रासादमधिरोहति । अकाले बहु चाल्पं वा भुक्तं त्वशनं विषमाशनसंज्ञं विद्यात् । कः पुनः कालो भोजनस्येति चेत् ? ब्रूमः । "प्रसृष्टे विण्मूत्र " इत्यादिनाऽऽहारकालं वक्ष्यति तद्वैपरीत्येनाऽकालो वेद्यः । त्रीण्यप्येतानि समशनाऽध्यशनविषमाशनानि मृत्युं वा सृजन्ति जनयन्ति । घोरान् व्याधीन्गुल्मादीन् वा ।

**काले सात्म्यं शुचि हितं स्निग्धोष्णं लघु तन्मनाः ॥ ३५ ॥**
**षड्रसं मधुरप्रायं नाऽतिद्रुतविलम्बितम् ।**
**स्नातः क्षुद्वान् विविक्तस्थो धौतपादकराननः ॥ ३६ ॥**
**तर्पयित्वा पितॄन् देवानतिथीन् बालकान्गुरून् ।**
**प्रत्यवेक्ष्य तिरश्चोऽपि प्रतिपन्नपरिग्रहान् ॥ ३७ ॥**
**समीक्ष्य सम्यगात्मानमनिन्दन्नब्रुवन् द्रवम् ।**
**इष्टमिष्टैः सहाश्नीयाच्छुचि भक्तजनाहृतम् ॥ ३८ ॥**

काले वक्ष्यमाणे । तन्मनाः भोजनगतचित्तः । स्नातः । बुभुक्षितः । विविक्तस्थ एकान्तस्थितः । तथा प्रक्षालितचरणहस्तमुखः । अनिन्दन् भोजनमगर्हमाणः । अब्रुवन्नभाषमाणः । इष्टं मनोरुचितं भोजनम् । तथा द्रवं द्रवप्रायम् । इष्टैः प्रियैः सहाश्नीयात् । क्षुद्वान् । अत्र च प्रशंसायां मतुप् । उत्पन्नप्रशस्तबुभुक्षः । तेन किञ्चिदपि यदा दुष्टबुभुक्षा स्यात्तदा नाद्यादित्यर्थः । दुष्टबुभुक्षाया लक्षणम्— "दोषोपनद्धं यदि लीनमामं पित्तोद्धतस्याणुरवाप्त वह्निम् । जायेत दुष्टा तु तदा बुभुक्षा सा मन्दबुद्धीन् विषवन्निहन्तीति " । किम्भूतं भोजनम् ? सात्म्यम् । तच्च सात्म्यं द्विधा । एकं स्वल्पकालाऽभ्यस्तं सुखावहम् । अन्यच्च जन्मनःप्रभृति सहात्मनाऽभ्यस्तं सुखावहं च । एतद्वैकं सात्म्यमुच्यते । तथा शुचि अनुच्छिष्टं केशाद्यनुपहतं च । हितं पथ्यम् । स्निग्धं च तदुष्णं च स्निग्धोष्णम् । तथा लघु लघुप्रायं न तु लघ्वेव, अत एवेदमुपपन्नम्—" षड्रसं मधुरप्रायमिति " । मधुररसो हि गुरुः, तथा च वक्ष्यति—" कटोः कषायस्तस्माच्च मधुरः परमं गुरुः " । तद्यदि लघ्वेव स्यान्मधुरप्रायमिति न घटेत, तस्माल्लघुप्रायमिति व्याख्येयम् । कथमद्यात्? आह—"नातिद्रुतविलम्बितम्" । किं कृत्वा ? पित्रादींस्तर्पयित्वा । तथा तिरश्चोऽप्यश्ववृषादीन् प्रतिपन्नपरिग्रहान् कृतग्रासस्वीकारान् प्रत्यवेक्ष्य तदाहारचिन्तां कृत्वेत्यर्थः । अथात्मानं समीक्ष्य यथा ममेदं सात्म्यमिति नित्यमप्रमत्तः सन् पर्यालोच्य । खरनादेनोक्तम्—" अतिद्रवाशी त्वहारगुणदोषान्न विन्दति । उन्मुह्य-

मौ० टि०—१ अस्मिन्नेवाध्याये ५५ श्लोके ।

त्यल्पमश्नाति च्छर्दयेद्वाऽनवस्थितः । विलम्बितं तु भुञ्जानो न तृप्तिमधिगच्छति ।
स्वादु बह्वपि शीतत्वाद्याति भक्तमहृद्यताम् । जल्पतो हसतश्चापि भुञ्जानस्याऽन्य-
चेतसः । त एव दोषा मन्तव्या ये विलम्बितभोजन " इत्यादि ।

**भोजनं तृणकेशादिजुष्टमुष्णीकृतं पुनः ।**
**शाकाऽवरान्नभूयिष्ठमत्युष्णलवणं त्यजेत् ॥ ३६ ॥**

तृणादिजुष्टं भोजनं त्यजेत् । आदिशब्देन मक्षिकादिपरिग्रहः । तथा भूय उष्णीकृतम् तथा शाकबहुलम् । तथाऽवरान्नं माषादि तद्भूयिष्ठम् । तथाऽत्युष्ण-मतिलवणं च त्यजेत् ।

**किलाटदधिकूर्चीकाक्षारशुक्ताऽऽममूलकम् ।**
**कृशशुष्कवराहाऽऽविगोमत्स्यमहिषामिषम् ॥ ४० ॥**
**माषनिष्पावशालूकबिसपिष्टविरूढकम् ।**
**शुष्कशाकानि यवकान् फाणितं च न शीलयेत् ॥ ४१ ॥**

तथा किलाटादीन्न शीलयेन्नाभ्यसेत् । न कादाचित्कोऽभ्यवहार एषां निषिध्यते । मुनिना तु "नाभ्यसेद्गौरवादिति" यथा हेतुरुपन्यस्तस्तथेह नोक्तमयुक्तत्वात् । तथा हि । एषामनभ्यवहारे यदि गुरुत्वमेव हेतुः स्यात् ततो यवादीनामपि बहुतराणां द्रव्याणां शीलनमयुक्तं स्यात् । तस्मादेषामशीलनेऽन्यदपि कारणं चिन्त्यं न तु गुरुत्वमात्रमेव । यथा किलाटकूर्चीकयोर्दोषलत्वं दध्नस्तु ज्वरादिकर्तृत्वं तथा स्रोतोलेपः । स्रोतोलेपत्वाच्चाऽनेकरोगहेतुत्वम् । क्षारस्य पुंस्त्वहानिकृत्त्वम् । शुक्तस्य दृष्टिहननत्वादि । तस्मादेषामपथ्यत्वाच्छीलननिषेधो बोध्यः ।

**शीलयेच्छालिगोधूमयवषष्टिकजाङ्गलम् ।**
**पथ्याऽऽमलकमृद्वीकापटोलीमुद्गशर्कराः ॥ ४२ ॥**
**घृतदिव्योदकक्षीरक्षौद्रदाडिमसैन्धवम् ।**
**त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च ॥ ४३ ॥**

शाल्यादीन् शीलयेत् । मधुसर्पिर्भ्यां सह, त्रिफलां च रात्रौ नेत्रबलाय शीलयेत् ।

**स्वास्थ्याऽनुवृत्तिकृद्यच्च रोगोच्छेदकरं च यत् ।**

न केवलं शाल्यादीनेव शीलयेत् । यच्च द्रव्यं स्वास्थ्याऽनुवृत्तिं करोत्यृतुचर्याविध्यादिषु युक्तमन्नपानादिकम् । तथा रोगोच्छेदकरं यत्किराततिक्तकादिद्रव्यं, तच्च शीलयेत् ।

**बिसेक्षुमोचचोचाऽऽम्रमोदकोत्कारिकादिकम् ॥ ४४ ॥**
**अद्याद् द्रव्यं गुरु स्निग्धं स्वादु मन्दं स्थिरं पुरः ।**
**विपरीतमतश्चान्ते मध्येऽम्ललवणोत्कटम् ॥ ४५ ॥**

बिसादिद्रव्यं गुर्वादिगुणयुक्तं पुरः पूर्वमद्यात् । मोदको लड्डुकः । उत्कारिका लप्सिका । अतोऽस्माच्च विपरीतं लघुरूक्षतीक्ष्णकटुरसप्रायमन्ते भोजनस्य

सेवेत। मध्ये चाम्ललवणोत्कटम्। खरनादे चोक्तम्—"कटुं लवणमम्लं वा पूर्व-माहारमाहरेत्। आहारो मधुरो ह्यग्रे गुरु विष्टभ्य जीर्यति"। तदेतद्देशसात्म्यादि-वशात्प्रमाणयितव्यम्।

**अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत्।**
**आश्रयं पवनादीनां चतुर्थमवशेषयेत्॥ ४६॥**

कुक्षेर्जठरस्यान्नेन द्वौ भागौ प्रपूरयेत्। पानेन जलादिना एकमंशं प्रपूरयेत्। चतुर्थमंशं पवनादीनामाश्रयमवशेषयेन्न त्वन्नेन पानेन वा प्रपूरयेत्। अत्र त्वंश-कल्पना परिकल्पनेनैव युज्यते, नत्वंगुलमानादिना। सुश्रुते चाभिहितम्—"प्रक्षा-लयेदद्भिरास्यं भुञ्जानश्च मुहुर्मुहुः। विशुद्धे रसने तस्मै रोचतेऽन्नमपूर्ववत्।" रसना विद्यते यस्य मुखस्य तद्रसनं, तस्मिन् रसने विशुद्धे, रोचतेऽन्नमपूर्ववत्।

**अनुपानं हिमं वारि यवगोधूमयोर्हितम्।**
**दध्नि मद्ये विषे क्षौद्रे, कोष्णं पिष्टमयेषु तु, ॥ ४७॥**
**शाकमुद्गादिविकृतौ मस्तुतक्राम्लकाञ्जिकम्।**
**सुरा कृशानां पुष्ट्यर्थं, स्थूलानां तु मधूदकम्, ॥ ४८॥**
**शोषे मांसरसो, मद्यं मांसे स्वल्पे च पावके,।**
**व्याध्यौषधाध्वभाष्यस्त्रीलङ्घनातपकर्मभिः॥ ४९॥**
**क्षीणे वृद्धे च बाले च पयः पथ्यं यथाऽमृतम्।**

यवगोधूमयोर्भुक्तयोरनु पश्चात्पानं शीतं जलं हितम्। तथा दध्नि मद्ये विषे क्षौद्रे च हिमं जलमनुपाने हितम्। पिष्टमयेषु कोष्णं जलं हितम्। शाकमुद्गा-दिविकृतौ च मस्त्वादिकमनुपानं हितम्। कृशानां पुंसां सुरा पुष्ट्यर्थं हिता। स्थू-लानां पुनः कर्शनाय मधूदकं हितम्। शोषे क्षये मांसरसो हितः पुष्टिकारित्वात्। मांसे भुक्ते मद्यमनुपानं हितम्। स्वल्पे च पावके मद्यमेवानुपानम्। व्याध्यादिभिः क्षीणे क्षपिते, पयो दुग्धं, पथ्यं हितम्। इह प्रकृतेऽपि पथ्यग्रहणं पथ्यतरत्व-ज्ञापनार्थम्। यथाऽमृतमित्यनेनैतत्प्रतिपादयति। यथाऽमृतं बलवर्णौजःकान्त्याऽऽ-युरादिजनकं तथेदमपीत्यर्थः।

**विपरीतं यदन्नस्य गुणैः स्यादविरोधि च॥ ५०॥**
**अनुपानं समासेन सर्वदा तत्प्रशस्यते।**

अन्नस्य भक्तवटकादेर्यद्विपरीतं गुणैस्तदनुपानं सदा प्रशस्यते। यथा स्निग्धस्य रूक्षं, रूक्षस्य स्निग्धं, शीतस्योष्णमुष्णस्य शीतम्। मधुरस्याम्लमम्लस्य मधुरमि-त्यादि। नन्वेवमुररीक्रियमाणे क्षीरस्य क्षैरेयादेर्वा चुक्रादिनामम्लानामनुपानं प्राप्तमित्याह। विपरीतगुणमपि यदविरोधि तदेवानुपानं सदा हितम्।

अनुपानस्य किं कर्मेत्याह—

**अनुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढाङ्गताम्॥ ५१॥**



**अन्नसंङ्घातशैथिल्यविक्लित्तिजरणानि च ।**

अनुपानमूर्जादीन्करोति । ऊर्जा मनःप्रहर्षः । तृप्तिः प्रीणनं शरीरेन्द्रियस्य, क्षामताविपरीतोऽत्रगुणः । तथा व्याप्तिः द्रवस्य हि गमनं न कठिनस्य । दृढाङ्गता स्थिरशरीरत्वम् । तथाऽन्नसङ्घातस्य शैथिल्यम् । विक्लित्तिर्विक्लेदनम् । जरणं परिणामः । एतानि च करोति ।

एवं गुणमप्यूर्ध्वजत्र्वादिषु न हितमित्याह—

**नोर्ध्वजत्रुगदश्वासकासोरःक्षतपीनसे ॥ ५२ ॥**
**गीतभाष्यप्रसङ्गे च स्वरभेदे च तद्धितम् ।**

उर्ध्वं जत्रुण ऊर्ध्वजत्रु, तस्मिन्ये गदास्तेषु तदनुपानं न हितम् । तथा श्वासादिषु न हितम् । गीतभाष्ययोः प्रकर्षेण सङ्गः सातत्येन सम्बन्धस्तस्मिन् । तथा स्वरभेदे स्वरसादे न तद्धितम् । ऊर्ध्वजत्रुगदादीनां ह्यनुपानं प्रदूष्यामाशयमुर.कण्ठस्थितमाहारजं स्नेहमासाद्याऽभिष्यन्दाऽग्निसादच्छर्द्यादीनामयान्विदध्यात् ।

सम्प्रति येषां पानमेव न शस्यते तानाह—

**प्रक्लिन्नदेहमेहाऽक्षिगलरोगव्रणाऽऽतुराः ॥ ५३ ॥**
**पानं त्यजेयुः,**

प्रक्लिन्नो देहो येषां विसर्गाद्यार्तानां ते पानं त्यजेयुः । मेहादीनां रोगातुरशब्देन प्रत्येकं सम्बन्धः । मेहरोगाद्यातुराः पानं द्रवरूपं त्यजेयुर्न केवलमन्नस्योपरि यदनुपानम् । स्वरनादे चोक्तम्—"मेही प्लीही व्रणी कुष्ठी पाण्डुजठरपीनसी । शोषातिसारी मन्दाग्निः पानीयं मन्दमाचरेत् । नोर्ध्वाङ्गपवनाविष्टे वाग्व्यायामहते न च । क्षतोरसि श्वासकासहिक्कावम्यर्दिते न च । निरन्ने चोर्ध्वरोगे च न पेयं वारि शीतलमिति" ।

**सर्वश्च भाष्याध्वशयनं त्यजेत् ।**
**पीत्वा भुक्त्वाऽऽतपं वह्निं यानं प्लवनवाहनम् ॥ ५४ ॥**

चशब्दो लुप्तनिर्दिष्टोऽत्र । सर्वोपि पुरुषः, पीत्वा भुक्त्वा च भाष्यादींस्त्यजेत् । तथाऽऽतपादीनां पञ्च त्यजेदित्यत्राऽप्यनुवृत्त्या योज्यम् । यानं रथादि । प्लवनं तरणम् । वाहनमश्वादि ।

काले सात्म्यमित्युक्तम् । भोजनस्य तु कः कालः ? इत्याह—

**प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे**
**विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ।**
**तथाऽग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ**
**प्रयुञ्जीताऽहारं विधिनियमितः कालः स हि मतः ॥ ५५ ॥**

आहारं विधिना पूर्वोक्तेन काले सात्म्यं शुचि हितमित्यादिना नियमितं प्रयुञ्जीत अश्नीयादित्यर्थः । कदा ? मूत्रपुरीषे प्रकर्षेण सृष्टे सति । न किञ्चिदेव त्यक्त

इति प्रशब्देन द्योतयति। तथा हृदये सुष्ठु विमले रसशेषकृतगौरवादिरहिते। तथा दोषे वातादौ स्वपथगे स्वमार्गगे। अजीर्णे ह्याहारेऽन्नशेषेण रुद्धगतयो वातादयः स्वस्थानं न लभेरन्। सुजीर्णे तु स्वस्थानस्थाः स्युः। उद्गारे विशुद्धे। चशब्दोऽनुक्तसमुच्चयार्थः। स्रोतोऽमुखेषु च विशुद्धेष्वित्यर्थः। क्षुदुपगमन उपगतायां क्षुधि। वातेऽनुसरत्यनुलोमं गच्छति। तथाऽग्नौ कायाग्नावुद्रिक्ते पाकक्षमे। तथा देहे पटुविन्द्रिये सुष्ठु लघौ च। कालः स हि मतः। हिशब्द एवार्थे। स एव कालो भोजनस्य दृष्टो न त्वतोऽप्यूर्ध्वम्। स ह्यतिकालः। तत्र भुक्तमन्नं वातविष्टब्धं कृच्छ्राद्विपच्येत। तथा चोक्तं तन्त्रान्तरे—"अतीतकालं भुञ्जानो वायुनोपहतेऽनले। कृच्छ्राद्विपच्येत भुक्तं द्वितीयं न च कांक्षति। कुक्षावाध्मानमाटोपसादांश्च कुरुतेऽधिकमिति"। तस्मात्पूर्वोक्तकाले भोजनमद्यादिति। "यमौ न्सौ तः सस्याद्रसरविविरामा धीरललिता"।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां मात्राशितीयोऽध्यायोऽष्टमः ॥ ८ ॥

# नवमोऽध्यायः।

पूर्वमन्नपानादिद्रव्यैकदेशः प्रायोपयोगवान्निर्दिष्टस्तस्य चाहारविधिर्मात्रा चोपदिष्टा। सम्प्रति द्रव्यरसवीर्यविपाकादयो वाच्याः। अन्नपानं हि रसवीर्यविपाकादि परीक्ष्य प्रयोक्तव्यम्, नाऽन्यथा। तस्मान्मात्राशितीयाध्यायादनन्तरं द्रव्यादिविज्ञानीय आरभ्यते।

**अथातो द्रव्यादिविज्ञानीयमध्यायं व्याख्यास्यामः॥**

द्रव्यमादिर्येषां ते द्रव्यादयः। आदिशब्देन रसवीर्यादिपरिग्रहः। द्रव्यादीनां विज्ञानमवगमस्तस्मै हितः। शेषं पूर्ववत्।

तत्र द्रव्यस्य रसादिभ्यः प्राङ्निर्देशः प्राधान्यात्। प्राधान्यं च स्वयमेव ग्रन्थकृत्प्रतिपादयन्नाह—

**द्रव्यमेव रसादीनां श्रेष्ठं, ते हि तदाश्रयाः।**

रसादीनामिति निर्धारणे षष्ठी। रसवीर्यादीनां मध्ये द्रव्यमेव प्रधानम्। ते रसादयो हि यस्मात्तदाश्रयास्तदेव द्रव्यमाश्रयो येषां त एवम्। अत एव केवला रसादयो नोपलभ्यन्ते। तस्माद् द्रव्यं प्रधानम्।

**पंचभूतात्मकं तत्तु,**

तुरवधारणे। यत्तदोश्च नित्यसम्बन्धाद्यदित्येतदनुक्तमप्यर्थाल्लभ्यते। तेनायमर्थः—यद्रसादीनामाश्रयभूतं कार्यं द्रव्यं, हरीतक्यादि स्थावरं, छागादि जङ्गमं, तत्पञ्चभूतात्मकम्। तत्र यत्कारणद्रव्यमाकाशादि, तस्य हि पञ्चभूतात्मकत्वे सत्याकाशादीनां पृथक्त्वेनात्मलाभो न स्यात्। ततश्चेदमाकाशं नाम महाभूतमिदं पृथ्वी

नाम महाभूतमिति गदितुं न पार्येत । सर्वस्य पञ्चमहाभूतात्मकत्वात् । न च यत्कारणं तत्कदाचित्कार्यं स्यात् । तस्मात्कार्यद्रव्यस्यैव पञ्चमहाभूतात्मकत्वं, न कारणद्रव्यस्याऽऽकाशादेः । मुनिस्तु—"खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रह इति" । न च वा द्रव्यमुक्त्वा तल्लक्षणं व्यधीत । यथा—"यत्राऽश्रिताः कर्मगुणाः कारणं समवायि यत् । तद् द्रव्यमिति ।" अस्यार्थः—यत्र कर्म परिस्पन्दलक्षणं संयोगवियोगकारणं, समवेतश्च गुणः, यत्र शब्दादयो गुर्वादयो वा बुद्धिवपुरादयो वा समवेताः । यच्च कारणं समवायि तद् द्रव्यमुच्यते। समवायीति—यत्कारणमपृथग्भवति तत्समवायिकारणं, यथा—तन्तवः पटस्य । एवमेतानि च कर्मगुणाश्रयित्वसमवायिकारणत्वानि, यद्यपि सर्वाणि सर्वस्मिन् द्रव्ये न विद्यन्ते तथाऽपि यद्यत्र सम्भवति तत्र तेन तस्य द्रव्यस्य द्रव्यत्वं कल्प्यम् । तद्यथा—मनसः कर्मगुणाश्रयित्वेन वाय्वादीनां तु कर्मगुणाश्रयित्वेन समवायिकारणत्वेन च । नन्वाकाशादीनि कारणद्रव्याणीति कथमुक्तम् ? यावताऽऽकाशस्य द्रव्यत्वमेव नास्तीति केचित्तान्ब्रूमहे । जलधेरिव प्रत्यक्षेणैवाऽस्य नीलरूपतोपलब्धेरस्तित्वं सिद्धम् । तथा कवयोऽपि नीलत्वमेवाऽस्य वर्णयन्ति । तथा कर्णाटस्य-"विपुलपुलिना हृद्या नद्यो वहन्त्यतिनिर्मलाः कमलसुभगो वायुर्घ्राणं विलम्बति मांसलः । नवजलधरच्छायावासादिवाचिरनिर्गतो वहति शशभृन्नीलस्निग्धे नभस्यवदाततामिति" । तथा च बाणस्य—"धावति शशिनि नभसीति" । तदेतद् दूषयति । तथा हि—दूराद् भ्रान्तिमात्रेणैव नीलरूपत्वमस्योपलभ्यते । यथा गिरेर्विविधवर्णस्याऽपि दूरान्नीलत्वप्रतीतिः । यत्कवीनां वर्णनं तस्मादलसेन निष्प्रमाणकमेव सम्भाव्यते । तथा च ते, नभसः शुक्लत्वं वर्णयन्ति । न च शुक्लत्वमेतस्योपपद्यते निराकारत्वात् । तस्मान्न नीलरूपत्वं नभसः । ननु दशनवैचित्र्यादस्य रूपवत्वमुपपन्नम् ? यथा पुरुषः शरादि ऋजुतां दिदृक्षुरेकं चक्षुर्निमील्याऽपरं चोन्मील्य तामुपलभते नतु नयनयुगलेन । तद्वत्सन्निकृष्टे गगनरूपस्यानादानं विप्रकृष्टे तु स्यादिति। नचैतद्युक्तम् । यतो रूपवत्त्वेऽभ्युपगम्यमाने स्पर्शवत्त्वमस्य प्रसज्ज्येत । रूपस्य स्पर्शेन नित्यसम्बन्धात् । स्पर्शवत्त्वे सत्याकाशत्वमेव न स्यात् । अतो न रूपवद्व्योम । अन्ये त्वेवं मन्यन्ते । पवनवदाकाशस्यावस्थाऽस्तु । यथा किल पवनः स्पर्शवान् । न च तस्मिन्रूपं सम्भवति । तथैवाकाशो न रूपवान्न च स्पर्शवानिति । तदिदमनवगतपदार्थस्वरूपाणां विलपनम् । ततो यत्र रूपं तत्राऽवश्यं स्पर्शो न तु यत्र स्पर्शस्तत्राऽवश्यं रूपम् । तस्मान्न नभो रूपवन्न च सत् । अत्रोच्यते । परमार्थदर्शिभिर्यदुपादायोत्पत्तिः कथ्यते तदस्ति । यथा पृथिव्यादि । उक्तं च—"अक्षरात् खं ततो वायुस्तस्मात्तेजस्ततो जलम् । उदकात् पृथिवी जाता भूतानामेष सम्भव" इति । तस्मादाकाशं द्रव्यमस्ति । अपि च । आकाशमुपादाय गतिवृद्धि-

प्रसवादिविशेषोपलब्धेराकाशस्याऽस्तित्वम्। यथा रूपोपलब्धिविशेषसम्भवाऽनुमितं चक्षुः। अपि च। आकाशाभावे ह्येकघनत्वं जगतः स्यात्। तथा शब्दाख्यस्य गुणस्यान्यथाऽनुपपत्त्याऽस्त्याकाशमिति। ननु वायुर्नास्त्येव? तत्स्वरूपग्राहकप्रमाणाभावात्। स्पर्शोपलब्धेर्वायोरस्तित्वमुच्यत इति चेत्? तदपि न युज्यते। अधुनैवोक्तं खाद्वायुरिति। गगनस्य च स्पर्शाभावाद्वायोरस्पर्शवत्त्वं कारणगुणपूर्वकत्वात्कार्यस्य। नैतदस्ति। कार्यस्योभयात्मकत्वदर्शनात्। कारणगुणपूर्वकं कार्यं दृष्टमकारणगुणपूर्वकं च दृष्टम्। तत्र कारणगुणपूर्वकं तावद्यथा—तन्तुश्वेतत्वपूर्वकं पटे श्वेतत्वम्। अकारणगुणपूर्वकं च दृष्टं यथा—हरिद्राक्षारसंयोगाद्रक्तता। तस्मादस्पर्शादाकाशादुत्पन्नो वायुः स्यादेव स्पर्शवान्। नन्वेवमप्यग्निजलपृथिवीष्वपि स्पर्शविशेषसम्भवात्तस्मादग्न्यादिसमवाय एव वायुर्व्यवह्रियते, न तद्व्यतिरिक्तो वायुरस्ति? अत्रोच्यते, सत्यमनलादीनामपि स्पर्शोऽस्ति किन्तु विलक्षण एवाऽसौ। तथा हि—तेजसः स्पर्शो रूपैकार्थसमवायी। अपां स्पर्शो रूपरसाभ्यां समवेतः। पृथिव्या रूपरसगन्धसमवेतः। यस्तु वायोः स्पर्शः, स पत्रचलनशाखाभञ्जनादिकर्मसमवायी। स नैषामग्न्यादीनां दृष्टानां नाप्यदृष्टानामात्मादिकालादीनाम्। गुणाश्च सर्वे द्रव्याश्रया दृष्टा रूपादय इव पटादिषु। तस्माद्वायोर्विशिष्टस्पर्शवत्त्वादस्तित्वमनुमीयते। तथा पवनस्य तत्कर्मोपदेशादस्तित्वम्। यस्य तत्वदर्शिभिः कर्मोपदिश्यते तदस्ति। यथा—कफादिवद्वातस्य च कर्मोपदिष्टम्। यथा—स्रंसव्यासव्यधस्वापेत्यादि। तस्मादस्ति वायुर्द्रव्यमिति। अग्निर्द्रव्यं नास्ति, इन्धनव्यतिरेकेणानुपलब्धेः? अत्रोच्यते। तत्वदर्शिभिरग्नेर्द्रव्योत्पत्तिहेतुत्वेनोपदेशादस्तित्वम्। तथा चेहैव वक्ष्यति—"आग्नेयं दाहभावर्णप्रकाशपवनात्मकमिति"। ननु युक्तश्चतुर्णां भूतानां सावयवत्वाद् द्रव्येषूत्कर्षाऽपकर्षसन्निवेशः, क्वचिद्द्रव्ये कस्यचिद्भूतस्य प्रमाणतः प्रभावतश्चावयवानामुत्कर्षापकर्षसद्भावाद्। आकाशस्य तु निरवयवत्वात्सूक्ष्मत्वादेकत्वाच्चोत्कर्षापकर्षसन्निवेशो न युक्तः? युक्तमाह भवान्, किन्तु सावयवानामेव द्रव्याणां येऽवयवाः क्वचित्पाषाणादौ संहता अवतिष्ठन्ते। येन तत्र द्रव्ये काठिन्यस्य प्रकर्षो भवति तत्र चाऽऽकाशमपकृष्यते। अनिबिडावयवे तु सन्निवेश आकाशः प्रकृष्यते। तदेवमनया युक्त्याऽऽकाशस्याऽपि न्यूनाधिकभाव उपपन्नः।

अथ केन महाभूतेन कथं कृत्वाऽऽरब्धं द्रव्यमित्याह—

**क्ष्मामधिष्ठाय जायते ॥ १ ॥**

पृथ्वीमाधारीकृत्योत्पद्यते। एवं पृथिव्याख्येन भूतेनाऽऽधारत्वेनोपकृत्य तेन तदारब्धं द्रव्यमित्युच्यते। यथा—

**अम्बुयोन्यग्निपवननभसां समवायतः।**
**तन्निर्वृत्तिर्विशेषश्च व्यपदेशस्तु भूयसा ॥ २ ॥**

अम्बु सलिलं योनिः कारणं यस्य तदम्बुयोनि द्रव्यम्। एवं जलं नाम महा-

भूतं रसवत्त्वाद्योनितयोपकृत्य तेन तदारब्धमित्युच्यते। मुनिनाऽप्युक्तम्—"रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा । निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः"। अमीषां द्रव्यादीनामाश्रयकर्मणोर्भेदश्चिन्त्यः । तथाऽग्निपवननभसां समवायादपृथग्भावात्तस्य द्रव्यस्य निर्वृत्तिर्निष्पत्तिः । तथा तस्य द्रव्यस्य यो विशेष इदमन्यदिदमन्यद्द्रव्यमित्येवंरूपो नानास्वभावः, सोऽप्यग्निपवननभसां समवायात्। एवमग्निपवननभोभिः समवायिकारणत्वेनोपकृत्य तैरेतद्द्रव्यमारब्धमित्युच्यते । एवं च सर्वं कार्यद्रव्यं पञ्चमहाभूतात्मकं पञ्चभिर्महाभूतैरारब्धत्वात् । ननु यदि पञ्चमहाभूतात्मकं द्रव्यं तत्कथमुच्यते पार्थिवमिदं द्रव्यमिदमाप्यमित्याह । व्यपदेशस्तु भूयसेति । यत्र द्रव्ये यद्भूतं भूयिष्ठमधिकृतं तेन तस्य व्यपदेशः संज्ञा भवति। यथा पृथिव्याधिक्योत्पादितं द्रव्यं पार्थिवम्। एवमाप्यं तैजसं च वेद्यम्। तदेवं सर्वं द्रव्यं पञ्चभूतात्मकं स्थितम्।

**तस्मान्नैकरसं द्रव्यं भूतसङ्घातसम्भवात्।**

तस्माद्भूतसङ्घातसम्भवात् कारणाद् द्रव्यं नैकरसमपि त्वनेकरसम्। एवं द्रव्यवद्रसस्याऽपि भूतसङ्घातसम्भवत्वम्। अत एव प्रतिद्रव्यं मधुरादिरसस्य नानास्वादोपलम्भः । तथा च—द्राक्षाऽक्षोडक्षीरेक्षुक्षौद्रगोजाक्षीरशुक्रादौ द्रव्ये सत्यपि माधुर्ये परोऽपर आस्वाद उपलभ्यते । एवमम्लानामपि मातुलुङ्गधान्याम्लादीनां द्रव्याणां नानास्वादोपलम्भः। एवं लवणादीनाम् । अपि चैषां द्राक्षादीनामनेकरसत्वमास्वादविशेषादनुमीयमानं भूयसा रसेनान्यरसाभिभवं कृत्वा व्यपदिश्यते। इदं मधुरमिदमम्लाद्यन्यतमं महाभूतवत्। यथा सर्वं द्रव्यं पञ्चमहाभूतात्मकं भूयसा महाभूतेनान्यमहाभूताभिभवं कृत्वा तेन व्यपदिश्यते पार्थिवमिदमाप्यमिदमिति । ननु द्रव्यनिर्णये कृते पाञ्चभौतिकं द्रव्यं यदेव प्रतिज्ञातं तदेव तस्मादित्यादिना निगमनग्रन्थेनाऽतिवाहयितुं युक्तं न पुनरप्रस्तुतमनेकरसत्वम्? तस्मादत्रैवं ग्रन्थः कर्तुं न्याय्यः—"तस्मान्नैकभूतजं द्रव्यं भूतसङ्घातसम्भवादिति"। अत्रोच्यते—षण्णामपि रसानां योनिरुदकं, ततश्चैकस्यैव महाभूतस्योदकसंज्ञस्य रसकारणत्वं प्राप्तं, नान्येषां नीरसत्वादिति कृत्वा न भूतसम्भवत्वं रसस्येत्येवंविधामाशङ्कामपनिनीषुर्भूतसङ्घातसम्भवत्वं रसस्य चैकेनैव प्रयत्नेन । 'तस्मान्नैकरसं द्रव्यं भूतसङ्घातसम्भवादिति' जगाद। मुनिश्चात एव रसस्य भूतसङ्घातसम्भवत्वं स्पष्टं कृत्वोवाच। यथा—'रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा। निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः"। इत्येवं भूतसङ्घातो रसानां द्रव्याश्रितानामपि सम्भवकारणम्। एतच्च रसभेदीये सविस्तरं व्याख्यास्यामः।

**नैकदोषास्ततो रोगास्तत्र व्यक्तो रसः स्मृतः ॥ ३ ॥**
**अव्यक्तोऽनुरसः किञ्चिदन्ते व्यक्तोऽपि चेष्यते।**

द्रव्यमनेकरसं, ततस्तस्मात्कारणादेकदोषा रोगा ज्वरादयो न भवन्ति अपि

त्वनेकदोषा इत्यर्थः । अत्रापि व्यपदेशस्तु भूयसेत्यध्याहार्यम् । ते त्रिदोषात्मकेऽपि ज्वरे, वाताधिके वातज्वरः, एवं पित्तज्वरः, श्लेष्मज्वर इत्येवंरूपो व्यपदेश उपपन्नः । ननु यदि सर्वो ज्वरः सन्निपातजस्तत्किमिति वच्म्यत्ययं सन्निपातज्वर इति ? ब्रूमहे—समविषमरूपं शक्त्युत्कर्षमाश्रित्य यत्र दोषा वर्तन्ते स सन्निपातज्वर इति तन्त्रकृता पुरस्ताद्विस्तरेण प्रतिपादयिष्यते। अथ को रसोऽनुरसो वेत्याह ? तत्रेत्यादि। तत्र तस्मिन् द्रव्ये यो व्यक्तः स्फुट उपलभ्यते स रसः स्मृतस्तन्त्रकृद्भिः । यश्चाव्यक्तोऽस्फुटप्रतिभासो रसनेन्द्रियेणोपलभ्यते सोऽनुरसः । हीनार्थोऽत्रानुशब्दोऽल्परस इत्यर्थः । नैतावदेवानुरसलक्षणमिति ? आह–किंचिदित्यादि । मुखक्षिप्तस्य हरीतक्यादेर्द्रव्यस्य रसनेन्द्रियेण किंचिदन्ते व्यक्तोऽप्युपलभ्यते यः सोऽप्यनुरस इष्यते मुनिभिरिति वाक्यशेषः । अन्त इत्यनेनैवं तद्बोधयति—अन्तेऽवसाने, न त्वादौ वा, पानमात्रे वा, न च मध्ये । तयोर्हि रसस्यैवोपलम्भः । अनुशब्दस्यात्र पश्चादर्थत्वम् । पश्चात् स्फुटोऽपि किंचिच्च उपलभ्यते सोऽप्यनुरस इत्यर्थः ।

ननु मधुरादयो रसा गुर्वादिगुणयुक्ताः कथं वक्तुं पार्यन्ते ? यतो मधुरादयो रसाः, गुणा गुर्वादयश्च । न च गुणानां मधुरादीनां गुर्वादिगुणाधारत्वमुपपन्नम् । तथा च वैशेषिकाः—"निर्गुणा गुणा" इति तस्मिन्पर्यनुयोग इदमाह—

**गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये, ॥ ४ ॥**
**रसेषु व्यपदिश्यन्ते साहचर्योपचारतः ।**

पृथिव्यादौ पृथिव्यादिमहाभूतारब्धे, द्रव्ये रसाश्रये, गुर्वादयो गुणाः, परमार्थत आश्रिताः, नतु रसेषु मधुरादिषु । यत्तु रसेषु व्यपदिश्यन्ते, तत् साहचर्योपचारतः । सहचरतीति सहचरस्तस्य भावः साहचर्यम् । यस्मिन्नेव गुडादौ द्रव्ये मधुरो रस आश्रितस्तस्मिन्नपि गुरुगुण आश्रित इति, मधुररसगुरुगुणयोः सहचरभावः । साहचर्येण तुल्याश्रयत्वेनोपचारः साहचर्योपचारस्तस्मात्साहचर्योपचारतो गुर्वादयो गुणा रसेषु मधुरादिषु व्यपदिश्यन्ते । यथा गुरुर्मधुरो रसो लघुरम्ल इत्यादि । न पुनः परमार्थतो रसेषु गुर्वादयः सन्ति । अस्ति च साहचर्येण व्यपदेशः । यथा घृतसहचरेण घृतस्थेनाग्निना दग्धो घृतदग्ध इत्युच्यते ।

**तत्र द्रव्यं गुरु स्थूलं स्थिरगन्धगुणोल्बणम् ॥ ५ ॥**
**पार्थिवं गौरवस्थैर्यसङ्घातोपचयावहम् ।**

तत्र तेषु पार्थिवादिषु पञ्चसु द्रव्येषु मध्ये, पार्थिवं द्रव्यं गुर्वादिगुणोत्कटम् । उल्बणशब्देनैतद् द्योतयति, पार्थिवे द्रव्येऽन्येऽपि गुणाः सन्ति, सर्वद्रव्याणां पाञ्चभौतिकत्वात्; गुर्वादयस्तत्रोत्कटाः । एवमप्यादिषु सर्वं योज्यम् । तथा गौरवाद्यावहं गुरुत्वादित्यर्थः ।

**द्रव–शीत–गुरु–स्निग्ध–मन्द–सान्द्र–रसोल्बणम् ॥ ६ ॥**
**आप्यं, स्नेहन–विष्यन्द–क्लेद–प्रह्लाद–बन्धकृत् ।**



आप्यं द्रव्यं द्रवादिगुणोल्बणं स्नेहनादिकृत्।

**रूक्ष-तीक्ष्णोष्ण-विशद-सूक्ष्म-रूप-गुणोल्बणम् ॥ ७ ॥**
**आग्नेयं, दाह-भा-वर्ण-प्रकाश-पचनात्मकम्।**

आग्नेयं द्रव्यं रूक्षादिगुणोत्कटं दाहादिकरम्।

**वायव्यं रूक्ष-विशदं लघु-स्पर्श-गुणोल्बणम् ॥ ८ ॥**
**रौक्ष्य-लाघव-वैशद्य-विचार-ग्लानि-कारकम्।**

वायव्यं रौक्ष्यादिगुणं रौक्ष्यलाघवादिकरञ्च।

**नाभसं सूक्ष्म-विशद-लघु-शब्द-गुणोल्बणम् ॥ ९ ॥**
**सौषिर्य-लाघव-करं,**

नाभसं द्रव्यं सूक्ष्मादिगुणोल्बणं सौषिर्यादिकरं च।

**जगत्येवमनौषधम्।**
**न किञ्चिद्विद्यते द्रव्यं, वशान्नानार्थयोगयोः ॥ १० ॥**

एवमनेन पञ्चमहाभूतारब्धेन गुर्वादिगुणयोगेन द्रव्याणां जगति भुवनेऽस्मिन्ननौषधभूतं न किंचिद् द्रव्यमस्ति, अपि तु सर्वमेव द्रव्यं यत्सिकतापांस्वादिकं तदौषधं चिकित्सितम्। वशान्नानार्थयोगयोः। अर्थश्च योगश्चार्थयोगौ। अर्थः प्रयोजनम्। योगो युक्तिः। यथाऽनया युक्त्यौषधमिदं योजितमस्य रोगस्य विजयाय स्यादनया चास्य रोगस्येति। नानाविधौ यावर्थयोगौ तयोर्वशात्सामर्थ्यात् सर्वमपि द्रव्यमौषधम्। रोगप्रतीकारहेतुत्वात्।

अथ किं द्रव्यं किम्भूतोत्कटं भवतीत्याह—

**द्रव्यमूर्ध्वगमं तत्र प्रायोऽग्निपवनोत्कटम्।**
**अधोगामि च भूयिष्ठं भूमितोयगुणाधिकम् ॥ ११ ॥**

ऊर्ध्वं गच्छतीत्यूर्ध्वगमम्। खप्रकरणे गमेरप्युपसङ्ख्यानमिति खः। प्रायो बाहुल्येनोर्ध्वगं द्रव्यमग्निपवनाधिकं भवति, यथा—मदनफलादि। भूयिष्ठं प्रायेण। तथा चाऽग्निसमीरणोत्कटस्याऽप्यधोगामित्वं दृष्टम्, यथा—हरीतक्यादेः। अचिन्त्यप्रभावत्वाद्यथा सर्पे विषमयत्वेऽपि तत्क्षणामणेर्विषघ्नत्वम्। भूमितोयोल्बणं द्रव्यमधोगामि भवति, यथा—त्रिवृतादि। यत्तु व्यामिश्रात्मकं तुल्यकालमूर्ध्वाधोदोषहरणं, तदिह ग्रन्थगौरवभयान्नोक्तमपि मिश्रीभूतोत्कटं द्रव्यं व्यामिश्रात्मकमिति सामर्थ्यलब्ध एवायमर्थः।

**इति द्रव्यं रसान्भेदैरुत्तरत्रोपदेक्ष्यते।**

इति परिसमाप्तौ। द्रव्यं प्रति यद्वक्तव्यं तन्निष्पन्नमित्यर्थः। एवं द्रव्ये निर्दिष्टे रसा निर्देष्टुं युक्ता इत्याह—रसानित्यादि। बहुवक्तव्यत्वादुत्तरत्रानन्तरेऽध्याये रसान् भेदैस्त्रिषष्टिसङ्ख्यावच्छिन्नैरुपदेक्ष्यते तन्त्रकृत्।

अथ वीर्यस्य विपाकादिभ्यः प्राधान्यात्तच्चर्चां प्रस्तौति—

**वीर्यं पुनर्वदन्त्येके गुरुस्निग्धहिमं मृदु ॥ १२ ॥**



**लघुरूक्षोष्णतीक्ष्णं च तदेवं मतमष्टधा ।**

द्रव्यमुक्तम् । वीर्यं पुनर्गुर्वादीनष्टौ गुणान् द्रव्याश्रितानिति समाचक्षते । तस्मादेवमनेन प्रकारेण वीर्यमष्टधाऽष्टप्रकारं गुर्वादीनां मतम् ।

**चरकस्त्वाह, वीर्यं तद्येन या क्रियते क्रिया, ॥ १३ ॥**
**नाऽवीर्यं कुरुते किंचित्, सर्वा वीर्यकृता हि सा ।**

चरकाचार्यः पुनरेवं वक्ति—येन स्वभावेन या क्रिया क्रियते यत्कर्म निष्पाद्यते तद्वीर्यम् । तदेव यावत् किञ्चिद् गुणजातं द्रव्ये स्थितं, तत्सर्वं वीर्यमेव, सर्वं वीर्यं करोति । अत एवाह—नाऽवीर्यमित्यादि । यत्र वीर्यं तत्र किञ्चित्करोति, न काञ्चिदप्यर्थक्रियां निष्पादयति । प्रतिनियतशक्तिपरिष्वक्तत्वात्सर्वभावानाम् । अत एवाह—सर्वेत्यादि । हिशब्दो यस्मादर्थे । यस्मात्सर्वा क्रिया वीर्यकृता वीर्येण जनिता, ततो यत्र वीर्यं, तत्र किञ्चित्कुरुते ।

**गुर्वादिष्वेव वीर्याख्या तेनाऽन्वर्थेति वर्ण्यते ॥ १४ ॥**
**समग्रगुणसारेषु शक्त्युत्कर्षविवर्तिषु ।**
**व्यवहाराय मुख्यत्वाद्बह्वग्रग्रहणादपि ॥ १५ ॥**

यतो वीर्यस्यैव करणसामर्थ्यं तेन कारणेन गुर्वादिष्वेवाष्टासु वीर्याख्याऽन्वर्थाऽनुगतार्थेति भण्यते । एवकारोऽवधारणार्थः । गुर्वादिष्वेव वीर्यसंज्ञा न तु रसविपाकप्रभावेषु । किम्भूतेषु गुर्वादिषु ? समग्रेत्यादि । समग्राश्च ते गुणाश्च तेषु साराश्चिरकालावस्थितयो गुर्वादय एव । तथा च जाठराग्निसंयोगेनाऽपि न मधुरादिरसस्वभावमेते जहति । सरतेः ' सृस्थिर ' इति घञि सारशब्दः । तथाऽन्येभ्यो मन्दसान्द्रादिभ्यो रसादिभ्यो वा गुणेभ्यो वा गुर्वादयः शक्त्युत्कर्षविवर्तिनः । शक्तेः सामर्थ्यस्योत्कर्ष आधिक्यम् । विशेषेण वर्तो विशेषेण भवनम् । शक्त्युत्कर्षस्य विवर्तः स विद्यते येषां त एवम् । किञ्च गुर्वादीनां गुणानां व्यवहाराय व्यवहारार्थम् । मुख्यत्वादन्येभ्यो गुणेभ्यो गुर्वादयः प्रधानभूता इत्यर्थः । तथा च गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रय इत्युक्तं, न मधुरादयो गुणा इति । तस्माद्गुर्वादीनां गुणानां व्यवहारमुख्यत्वं रसादिभ्यः । तथा बह्वग्रग्रहणाद्बहुग्रहणादग्रग्रहणाच्च बहवो द्रव्यरसादयो गुर्वादिभिर्गृहीता भवन्ति । तथा चायुर्वेदशास्त्रेषु रसादिभ्यो गुर्वादीनामग्रे ग्रहणं दृष्टम् । यथा वातादिदोषगुणनिरूपणायां गुर्वादीनामेव पूर्वं ग्रहणं, न रसादीनाम् । तथा च ' तत्र रूक्षो लघुरित्याचार्योऽपठद्वाय्वादिलक्षणे । एवं गुर्वादीनामेवाग्रे ग्रहणाद् गुर्वादिष्वेव वीर्याख्याऽन्वर्थाऽनुगतार्थेति भण्यते ।

**अतश्च विपरीतत्वात्सम्भवत्यपि नैव सा ।**
**विवक्ष्यते रसाद्येषु वीर्यं गुर्वादयो ह्यतः ॥ १६ ॥**

अतोऽस्माच्च कारणकदम्बकाद्विपरीतत्वाद्वैपरीत्येन स्थितत्वान्न रसादयो वीर्यम् । तथाहि—रसस्य सारत्वं नाऽस्ति । जाठराऽनलसंयोगवशेन रसान्तरोत्पत्तेः । गुर्वा-

दीनां तु जाठराग्निसंयोगवशेनाऽपि नान्यऽथाभावः । तथा न रसस्य शक्त्युत्कर्ष-विवर्तित्वम् । यतो रसस्य गुर्वाद्याहितशक्तेरेव स्वकर्मणि सामर्थ्यम् । व्यवहाराय यथा गुर्वादेर्मुख्यत्वं यथा बहुग्रग्रहणं तथा प्राग्दर्शितम् । प्रभावः सर्वातिशायी द्रव्यस्वभावस्तस्य च क्रियानिर्वर्तनसामान्ये सत्यपि वीर्यसंज्ञा पूर्वोक्ताद्धेतोर्न वर्तते । एवं विपाककर्मणोरपि चिन्त्यम् । तस्माद्रसाद्येषु सम्भवत्यपि विद्यमानाऽप्यसद्रूपेव सा वीर्यसंज्ञा न विवक्ष्यते नोररीक्रियते । आदौ भव आद्य. । दिगादित्वाद्यत् । रस आद्यो येषां प्रभावादीनां त एवं तेषु । वीर्यमित्यादि । हिशब्दो यस्मादर्थे । यत एवं सा वीर्यसंज्ञा सम्भवत्यपि रसादिषु वैपरीत्यान्न विवक्ष्यतेऽतो गुर्वादय एव वीर्यं, न रसादयः ।

**उष्णं शीतं द्विधैवाऽन्ये वीर्यमाचक्षतेऽपि च ।**

अन्य आचार्या उष्णं शीतमिति द्विप्रकारं वीर्यमाचक्षते । एवकारोऽवधारणार्थः । द्विधैव वीर्यं नाष्टधेति । अपिचेति निपातसमुदायो युक्तिसमुच्चये । तेऽपि सयुक्तिकमेवाहुरित्यर्थः ।

तामेव युक्तिं दर्शयन्नाह—

**नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ॥ १७ ॥**
**व्यक्ताऽव्यक्तं जगदिव नातिक्रामति जातुचित् ।**

नानास्वभावमपि द्रव्यं स्थावरजङ्गमाद्यचेतनचेतनमग्नीषोमौ महाबलावुत्कृष्टशक्ती, न जातु कदाचिदतिक्रामति नोल्लङ्घ्य वर्तते । अवश्यं हि द्रव्यं किञ्चिदाग्नेयं किञ्चित्सौम्यम् । अतः किंचिद् द्रव्यमुष्णवीर्यं किंचिच्छीतवीर्यम् । तथा च मुनिः— "न मत्स्याः पयसा सहाभ्यवहार्याः । उभयं ह्येतन्मधुरं मधुरविपाकं शीतोष्णत्वाद्विरुद्धवीर्यं विरुद्धवीर्यत्वाच्छोणितप्रदूषणायेति" । अत्र दृष्टान्तमाह—व्यक्ताऽव्यक्तमित्यादि । व्यक्तं चाव्यक्तं च व्यक्ताऽव्यक्तं नानात्मकमपि जगत्त्रैलोक्यं कर्तृ यथा व्यक्तं चाव्यक्तं च नातिक्रामति तथा द्रव्यमग्निषोमावित्यर्थः । व्यक्तं स्थूलं दृश्यमित्यर्थः । साङ्ख्यानां तु महदादि व्यक्तमव्यक्तं प्रधानं पुरुषश्च ।

**तत्रोष्णं भ्रमतृड्ग्लानिस्वेददाहाऽऽशुपाकिताः ॥ १८ ॥**
**शमं च वातकफयोः करोति, शिशिरं पुनः ।**
**ह्लादनं जीवनं स्तम्भं प्रसादं रक्तपित्तयोः ॥ १९ ॥**

तत्र तयोरुष्णशीतयोर्मध्य उष्णमुष्णवीर्यं भ्रमादीन् करोति । आशुपाकितां शीघ्रपाकित्वम् । शिशिरं शीतवीर्यं तु ह्लादनादीन्करोति ।

वीर्यादनन्तरं विपाकं लक्षयति—

**जाठरेणाऽग्निना योगाद्यदुदेति रसान्तरम् ।**
**रसानां परिणामान्ते स विपाक इति स्मृतः ॥ २० ॥**

जाठरेणोदर्येणाऽग्निना योगात् संश्लेषाद्यद्रसानां परिणामान्ते जठरनिष्ठाकाले

रसान्तरं रसविशेष उत्पद्यते स विपाक इति स्मृतो मुनिभिः कथितः ।

**स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ।**
**तिक्तोषणकषायाणां विपाकः प्रायशः कटुः ॥ २१ ॥**

स्वादुर्मधुरो गुडादिः, पटुर्लवणः सैन्धवादिर्मधुरं कृत्वा पच्यते रस इति सम्बन्धः । मधुरमिति क्रियाविशेषणत्वान्नपुंसकलिंगम् । स्वादुः स्वादुविपाको लवणोऽपि स्वादुविपाक इत्यर्थः । अम्लो रसो दधिकाञ्जिकादिरम्लं पच्यतेऽम्लविपाको भवति । तिक्तोषणकषायाणां प्रायशः कटुर्विपाको भवति । प्रायशोग्रहणं सर्वत्राऽपि योजनीयम् । तेन व्रीहिस्थो मधुरो रसोऽम्लं पच्यत इत्युपपन्नम् । तथा चोक्तम्—"स्वादुरम्लविपाकोऽन्यो व्रीहिरिति"[1] । तथा हरीतक्या भूयस्त्वेन यः कषायो रसः स मधुरमेव पच्यते । तथा चोक्तम्—"कषाया मधुरा पाक इति"[2] । तथा कटुको रसः शुण्ठ्यार्द्रकपिप्पल्यादिस्थो मधुरं पच्यते । तथा—"नागरं[3] दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत् । रुच्यं लघु स्वादुपाकमिति" । तद्वदार्द्रकमपीति । तथा—श्लेष्[4]मला स्वादुशीतार्द्रेत्यारभ्य यावत्स्वादुपाकेति" । अत्र केचिदाहुः—तिक्तकषाययोरेव कटुविपाकितया पित्तकर्तृत्वमापद्यत इति । तदेतदसत् । शीतवीर्यत्वेनैतयोः पित्तहन्तृत्वात् । वीर्यं हि रसविपाकौ विजयते । वक्ष्यति हि—"रसं[5] विपाकस्तौ वीर्यमिति" ।

**रसैरसौ तुल्यफलस्तत्र द्रव्यं शुभाऽशुभम् ।**
**किञ्चिद्रसेन कुरुते कर्म, पाकेन वाऽपरम्, ॥ २२ ॥**
**गुणान्तरेण, वीर्येण, प्रभावेणैव किञ्चन ।**

रसैर्जिह्वावैषयिकैर्मधुराम्लकटुकैर्विपाककालोपलभ्यो मधुराम्लकटुलक्षणो यो रसो भवत्यसौ तुल्यफलः । तुल्यं सदृशं फलं यस्य स तुल्यफलः । एतदुक्तं भवति अभ्यवहृतस्य मधुररसस्य जाठराग्निसंयोगवशाद्यद्रसान्तरं फलतया निष्पन्नं तद्रसैः सदृशम् । फलग्रहणेनैतत्प्रतिपादयति । फलोपममेव वृष्यादिलक्षणकार्यसदृशं, न तु कुसुमोपमं देहाह्लादनादिलक्षणकार्यमिति । एवमम्लादीनामपि व्याख्येयम् तत्रेत्यादि । तेषु रसवीर्यविपाकादिषु मध्ये द्रव्यं किंचिच्छुभाऽशुभं सदसत्कर्म रसेन कुरुते । यथा—मधु कषायरसत्वेन पित्तं शमयति । किञ्चिद्विपाकेन । यथा—तदेव मधु कटुविपाकितया कफं हन्ति । किंचन द्रव्यं गुणान्तरेणाऽन्योन्यगुणविकृतत्वाद्रसविपाकतो यो गुणान्तरो गुर्वादिस्तेन । यथा—अम्लं काञ्जिकं कफं शमयति, रौक्ष्यात् । किञ्चन वीर्येण । यथा—कषायतिक्तं महत्पञ्चमूलं वातं जयति

---

मौ० टि० १–वाग्भ० सू० ६ अ० ६ श्लो० । २–वा०सू० ६ अ०१५१ श्लो० ३–वा० सू० ६ अ० १६१ श्लो० । ४–वा० सू० ६ अ० १५६,१६० श्लो० । ५–अस्मिन्नेवाध्याये २५ श्लोके ।

नतु पित्तमुष्णवीर्यत्वात् । किञ्चन द्रव्यं प्रभावेणैव शुभाऽशुभं कर्म कुरुते । यथा—अम्लोष्णा सुरा क्षीरं वर्धयति ।

तनु गुरूष्णाऽम्लमधुरादिगुणानां रसादीनां विरोधः । तत्रैषां कार्यनिष्पत्तौ समशक्तित्वं न वेत्याशङ्कानिवृत्त्यर्थमाह—

**यद्यद्द्रव्ये रसादीनां बलवत्त्वेन वर्तते ॥ २३ ॥**
**अभिभूयेतरांस्तत्तत्कारणत्वं प्रपद्यते ।**

रसादीनां रसवीर्यविपाकप्रभावानां मध्ये यद्रसादिवस्तु रसो वीर्यं वा विपाको वा प्रभावो वा बलवत्त्वेन बलिष्ठतया द्रव्यं वर्ततेऽवतिष्ठते तत्तद्वस्तुजातमितरानबलिष्ठानभिभूय विफलीकृत्य कारणत्वं प्रपद्येत । कर्मकरणे कारणतामासादयतीत्यर्थः ।

अत इदमाह—

**विरुद्धगुणसंयोगे भूयसाऽल्पं हि जीयते ॥ २४ ॥**

हि यस्माद्विरुद्धगुणसंयोगे संहतीभावे सति, यदल्पं वस्तु तद् भूयसा बलवता जीयतेऽभिभूयते । गुणशब्देन चात्र रसादयो गृह्यन्ते, न पारिभाषिका गुर्वादयोऽप्रकृतत्वात् । विरुद्धगुणसंयोग इत्यत्र विरुद्धगुणसमवेतद्रव्यसंयोग इति कल्प्यं, न विरुद्धगुणसंयोग इति । न हि गुणानां संयोगो वक्तुं युज्यते किं तर्हि द्रव्याणाम् । तथा च मुनिः—"संयोगस्तु द्वयोर्बहूनां वा संहतीभावः" । विरोधश्च द्विविधः । स्वरूपतः कार्यतश्च । स्वरूपतो विरोधो गुरुलघ्वोः शीतोष्णयोश्च । कार्यतो यथा—वायौ जेतव्येऽरूक्षोष्णद्रव्यसंयोगोपयोगः । अत्र हि यो गुणानां विरोधः स कार्येण । तत्र यदल्पं वस्तुजातं तद्भूयसा वस्तुजातेनाऽभिभूयते । तत्र यथा क्षीरं शीतवीर्यमपि मधुररसहेतुकस्नेहगौरवादिभिः सहायबाहुल्याद्वातशमनाख्यं कार्यं करोति, न पुनः स्वकार्यं वातप्रकोपाख्यम् ।

यत्र तु द्रव्ये रसादीनामुत्कर्षाऽसम्भवः परस्परं साम्यं, तत्र कस्य कार्यकारणत्वम्? इत्याह—

**रसं विपाकस्तौ वीर्यं, प्रभावस्तान्व्यपोहति ।**
**बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥ २५ ॥**

रसं मधुरादिषड्विधं, विपाकः कर्ता, व्यपोहति कार्यकरणे कुण्ठयति । यथा—मधुरो मधुनि रसः, कटुना विपाकेनाऽभिभूयते । अत एव पवनशमनाख्यं कार्यं मधुररसहेतुकं न करोति, अपि तु वातप्रकोपनाख्यं कटुविपाकहेतुकमेव करोति । तौ रसविपाकौ वीर्यं कर्तृभूतमपोहति । यथा महिषाऽऽमिषोत्थितौ मधुररसविपाकावुष्णवीर्य्याख्यं कर्तृ अभिभवति । अत एव तन्मांसं पित्तादिदूषणम् । अन्यथा स्वादुरसविपाकित्वात्पित्तशमकमेव स्यात् । प्रभावस्तु त्रीनपि रसादीन् विजयते ।





अत एवाह—

**कुर्याच्चिकित्सां स्वामेव बलेनान्याभिभाविषु ॥ २० ॥**

बलेनात्मीयया शक्त्याऽन्याभिभाविष्वन्यस्थानिदोषमभिभवितुं शीलं येषां तेऽन्याभिभाविनः। स्थानिदोषं पराभूय तत्र ये सन्तिष्ठन्त इत्यर्थः। तेषु स्वामेव चिकित्सां कुर्यादित्यर्थः। किमेष एव नियमो यदन्यस्थानगतेष्वबलेष्वागन्तुषु स्थानिदोषसम्बन्धिनीं चिकित्सां कुर्यात्। बलवत्सु पुनरागन्तुसम्बन्धिनीं चिकित्सां कुर्यात्।

अथ पक्षान्तरेऽपि कुत्रचित्कचिद्विद्यत इत्यत आह—

**आगन्तुं शमयेद्दोषं स्थानिनं प्रतिकृत्य वा।**

स्थानिनं दोषं प्रतिकृत्य यथाऽसौ स्थानिदोष आगन्तुदोषचिकित्सानिर्वर्तनान्न विकारं कुर्यात्तथा तस्य पूर्वं प्रतीकारं कृत्वा पश्चात् स्वैरेवोपक्रमैरबलिनमप्यागन्तुं दोषं शमयेच्चिकित्सेत्। न केवलमन्यस्थानसंस्थेष्वागन्तुष्वबलेषु स्थानिदोषचिकित्सां कुर्याद्यावदागन्तुदोषचिकित्सामपि कुर्यादित्यर्थः। अथाऽसौ स्थानिदोष आगन्तुदोषेण बलवत्वादभिभूयते ततोऽस्य विकारकरणे प्रत्यसमर्थत्वात्तत्प्रतीकारमकृत्वैव चागन्तुं शमयेदिति वाशब्दार्थः। अन्यस्थानसंस्थेष्विति बहुवचननिर्देशः पर्यायेण दोषाणां स्थितत्वादन्यथा द्वयोरेकस्य वाऽन्यस्थानस्थितत्वं सम्भवति न त्रयाणाम्।

तिर्यग्गतेषु दोषेषु यत्कार्यं तदाह—

**प्रायस्तिर्यग्गता दोषाः क्लेशयन्त्यातुरांश्चिरम् ॥ २१ ॥**
**कुर्यान्न तेषु त्वरया देहाग्निबलवित्क्रियाम्।**

तिर्यग्गता दोषाः प्रायो बाहुल्येनाऽऽतुरांश्चिरं क्लेशयन्ति पीडयन्ति। तेषु तिर्यग्गतेषु दोषेषु त्वरया शीघ्रमेव क्रियां चिकित्सां न कुर्याद्वैद्य इति शेषः। कीदृशो वैद्यो देहाग्निबलाभिज्ञः।

कथं तेषामुपक्रमः कार्य इत्याह—

**शमयेत्तान् प्रयोगेण सुखं वा कोष्ठमानयेत् ॥ २२ ॥**

तांस्तिर्यग्गतान् दोषान् प्रयोगेण शास्त्रविहितेन शमयेत्। सुखं वेति। यथा वा देहपीडा न भवति तथा क्रमेण कोष्ठमानयेद्वृद्ध्याऽभिष्यन्दनादित्यादिना।

**ज्ञात्वा कोष्ठप्रपन्नांश्च यथाऽऽसन्नं विनिर्हरेत्।**

ज्ञात्वेत्यादि। कोष्ठगतांश्चावगत्य यथाऽऽसन्नं विनिर्हरेत्। यो यस्यासन्नो मार्गो गुदं मुखं घ्राणं वा तेनैव यथाऽऽसन्नं वमनविरेचनादिना निष्कासयेदित्यर्थः।

सम्प्रति साममललिङ्गमाह—

**स्रोतोरोधबलभ्रंशगौरवाऽनिलमूढताः ॥ २३ ॥**

**आलस्याऽपक्तिनिष्ठीवमलसङ्गाऽरुचिक्लमाः।**
**लिङ्गं मलानां सामानां निरामाणां विपर्ययः॥ २४॥**

स्रोतसां रोधः। बलस्य भ्रंशो हानिर्बलभ्रंशः। गौरवं गुरुत्वम्। अनिलस्य वायोर्मूढता सम्यगसञ्चारः। आलस्यं तन्द्रा। अपक्तिराहारस्याऽपाकः। निष्ठीवो मुखस्रावः। मलस्य पुरीषादेः सङ्गोऽप्रवृत्तिः। अरुचिरन्नानभिलाषः। क्लमो ग्लानिः। इत्येतत्सामानां मलानां लिङ्गं लक्षणम्। निरामाणां विपर्ययोऽस्माद्वैपरीत्यम्।

सम्प्रति आमसम्भवमाह—

**ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम्।**
**दुष्टमामाशयगतं रसमामं प्रचक्षते॥ २५॥**

ऊष्मणोऽग्नेरल्पबलत्वेन दौर्बल्येनाऽद्यं प्रथमधातुं रसं रसाख्यमपाचितमामं प्रचक्षते वदन्त्याचार्या इति शेषः। किम्भूतं रसम्? आमाशयगतम्। तथा दुष्टं वाताद्यनुशयितम्। रसग्रहणं पवनस्य निरासार्थम्। अन्यथा आद्यो धातुर्वाताख्य इत्याशङ्क्येत। वातादीनामपि हि धारणाद्धातुसंज्ञाऽस्त्येव।

**अन्ये दोषेभ्य एवातिदुष्टेभ्योऽन्योन्यमूर्छनात्।**
**कोद्रवेभ्यो विषस्येव वदन्त्यामस्य सम्भवम्॥ २६॥**

अन्येऽपरे आचार्या दोषेभ्य एव वातादिभ्योऽतिदुष्टेभ्योऽन्योन्यमूर्छनात् परस्परमिश्रीभावादामस्य सम्भवं कथयन्ति। केभ्यः कस्येव? यथा कोद्रवेभ्यो विषस्य सम्भवं कथयन्ति तथा दोषेभ्य आमस्य सम्भवम्।

**आमेन तेन सम्पृक्ता दोषा दूष्याश्च दूषिताः।**
**सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः॥ २७॥**

तेन पूर्वोक्तलक्षणेनाऽमेन सम्पृक्ताः संयुक्ता दोषा दूष्याश्च रसादयः। कीदृशाः? दूषितास्तैरेव वातादिभिः। सहाऽऽमेन सामा इत्युपदिश्यन्ते तत्र तत्र प्रदेशे तन्त्रे भण्यन्ते। ये च रोगा ज्वरादयस्तदुद्भवा वातादिदोषसमुत्थास्तेनामेन युक्ताः सामा इत्युच्यन्ते। यथैहैव। 'अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे' इति। आमलक्षणं चैवं पठन्ति। "द्रवं गुर्वनेकवर्णं हेतुः सर्वरोगाणां स्निग्धं पिच्छिलमामं तन्तुमदनुबद्धशूलं दुर्गन्धीत्यादि"। समानां च वातादीनां सङ्ग्रहे पृथग्लक्षणमुक्तम्। यथा—"वायुरामान्वयः सार्तिराध्मानकृदसञ्चरः। दुर्गन्धमसितं पित्तं कटुकं बहलं गुरु। आविलस्तन्तुमाँस्त्यानः प्रलेपी पिच्छिलः कफः। विपर्यये तु पक्वत्वं तथा ताम्रं समेचकम्। पीतं च पित्तमच्छं च श्लेष्माऽच्छः पिण्डितोऽथवा। विशदश्च

---

१ "विण्मूत्रनखदन्तत्वक्चक्षुषां पीतता भवेत्। रक्तत्वमतिकृष्णत्वं पृष्ठास्थिकटिसन्धिरुक्। शिरोरुग् जायते तीव्रा निद्रा विरसता मुखे। कचिच्च श्वयथुर्गात्रे ज्वरोऽतीसारहर्षणम्"। क्षेपकावत्रेति केचित्कथयन्ति।



सफेनश्च धवलो मधुरो रस" इति।

सामा अपि दोषा यादृशा न निर्हार्यास्तादृशान् दर्शयति।

**सर्वदेहप्रविसृतान् सामान् दोषान्न निर्हरेत्।**
**लीनान् धातुष्वनुत्क्लिष्टान् फलादामाद्रसानिव ॥ २८ ॥**
**आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वतः।**

सामान् दोषान् वातादीन् सर्वस्मिन्देहे प्रविसृतान् व्याप्ताशेषकायान् धातुषु रसाद्येषु लीनान् श्लिष्टाननुत्क्लिष्टान् स्वस्थानादचलितान् न निर्हरेद्वमनादिभिर्न शोधयेत्। कुतः? दुर्निर्हरत्वाद्दुःखेन निर्हर्तुं शक्यत्वात्। ते हि निर्ह्रियमाणा आश्रयस्य शरीराख्यस्य नाशाय स्युः। यावत्तु सर्वदेहप्रविसृता न भवन्ति यथा भुक्तानन्तरं ज्वरोत्पत्तौ नवातिसारे च तथा वमनेन हरीतक्या च यथायोगं निर्हारोऽनुज्ञात एव ग्रन्थकृता। अत्र दृष्टान्तमाह। फलादित्यादि। आमादपक्वात्फलादाम्रादे रसो निर्ह्रियमाणो दुर्निर्हरत्वादाश्रयस्य फलस्य यथा नाशाय भवत्येवं दोषा अपि।

तर्हीदृशे दोषे किं कार्यमित्याह—

**पाचनैर्दीपनैः स्नेहैस्तान् स्वेदैश्च परिष्कृतान् ॥ २९ ॥**
**शोधयेत् शोधनैः काले यथासन्नं यथाबलम्।**

तांस्तथाविधान् दोषान् पाचनैर्ज्वराद्यध्यायोक्तैः। दीपनैरिति पाचनानां स्नेहानां च विशेषणं मध्यदीपवत्। अग्निदीप्तिकृद्भिः पाचनैः स्नेहैश्च परिष्कृतान् कृतसंस्कारान् यथासन्नं यथाबलं च कृत्वा यथोक्ते काले शोधनैर्द्रव्यैः शोधयेत्। यथासन्नमिति। यस्य दोषस्याऽऽसन्नो यो मार्गस्तेनैव तं निर्हरेत्। यथाबलमिति। यस्य यावद्बलमातुरस्योत्तमं मध्यममधमं वा तज्ज्ञात्वा मृदुना मध्येन तीक्ष्णेन वा शोधनेन शोधयेदित्यर्थः।

कस्य को मार्ग आसन्न इत्याह—

**हन्त्याशु युक्तं वक्त्रेण द्रव्यमामाशयान्मलान् ॥ ३० ॥**
**घ्राणेन चोर्ध्वजत्रूत्थान् पक्वाधानाद् गुदेन च।**

द्रव्यं वक्त्रेण युक्तं पीतमामाशयादाशु मलान् हन्ति। घ्राणेन तु पीतमूर्ध्वजत्रूत्थान्मलानाशु हन्ति। गुदेन युक्तं पक्वाधानात् पक्वाशयादाशु मलान् हन्ति।

इदानीं यादृशा आमा न धार्यास्तादृशान् दर्शयति—

**उत्क्लिष्टानध ऊर्ध्वं वा न चामान्वहतः स्वयम् ॥ ३१ ॥**
**धारयेदौषधैर्दोषान् विधृतास्ते हि रोगदाः।**

अध ऊर्ध्वं वोत्क्लिष्टानामान् स्वयं वहतो यत्नं विनैव प्रवृत्तानौषधैः स्तम्भनैर्न धारयेत्। कुत इत्याह। हि यस्मात्ते दोषा विधृता रोगदा ज्वरादिकारिणः।

तेषु तु यत्कार्यं तदाह—

**प्रवृत्तान् प्रागतो दोषानुपेक्षेत हिताशिनः ॥ ३२ ॥**



**विबद्धान् पाचनैस्तैस्तैः पाचयेन्निर्हरेत वा ।**

अतोऽस्माद्धेतोः प्रवृत्तान् प्राक् प्रारम्भकाले दोषान् हितभोजिन उपेक्षेत सङ्ग्रहणेन न धारयेत् । विबद्धानपित्प्रवृत्तांस्तैस्तैर्यथोक्तैः पाचनैः पाचयेत् पाकं नयेन्निर्हरेद्वा ।

अथ कः शोधनकाल इत्याह—

**श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् ॥ ३३ ॥**
**ग्रीष्मवर्षाहिमाचितान् वाय्वादीनाशु निर्हरेत् ।**

क्रमाद्यथाक्रमं ग्रीष्मचितं वायुं श्रावणे निर्हरेत् । वर्षाचितं पित्तं शरदि निर्हरेत् । हेमन्तशिशिरचितं कफं वसन्ते निर्हरेत् । एते हि साधारणाः कालाः । अत एतेषु शोधनं युक्तम् ।

ननु ग्रीष्मादिष्वेव कस्माद्वातादयो न शोध्यन्त इत्याह—

**अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः ॥ ३४ ॥**
**सन्धौ साधारणे तेषां दुष्टान् दोषान् विशोधयेत् ।**

यतो ग्रीष्मादयोऽत्युष्णादियुक्तास्तेषामत्युष्णवर्षशीतानां ग्रीष्मवर्षाहिमागमानां साधारणे सन्धौ शीतोष्णवर्षसमभावे काले दोषान् वातादीन्दुष्टान्विकृतान्विशोधयेद्विनिर्हरेत् । सन्धौ हि साम्यमतः शोधनं प्रति न ते कालाः । तथा हि ग्रीष्मे तावदादानग्लानं खरतररविकिरणतप्तं पिपासाक्लमाद्याकुलमतिप्रविलीनदोषमतिशिथिलं शरीरं भवति । औषधं पुनरतिखरदिवाकरकरनिर्भरतापादुष्णतीक्ष्णतां यातमतियोगाय सम्पद्यते । प्रावृषि घनघनौघसंघट्टसादिते सर्वतो जगत्यवसन्नोऽग्निर्भवति । अदानदुर्बलं च शरीरं भवति । ओषधयश्च जलदजलप्लावितमूला अल्पवीर्याः सम्पद्यते । भूबाष्पसंयोगाच्चौषधीनां विदग्धत्वम् । अतो मध्यतां गता अयोगायैव । शीतकाले चाऽतिशीतोपहतत्वाच्छरीरमतिवातविष्टब्धमतिस्निग्धगुरुदोषं भवति । शीतोपहतत्वाच्चोष्णस्वभावमप्यौषधं संशोधनायोपयुक्तं मन्दवीर्यतां प्राप्तमयोगायैव कल्पते । तस्माद्युक्तमुक्तमत्युष्णवर्षशीतत्वाद्ग्रीष्मादिषु स्वस्थस्य शोधनमयुक्तम् ।

नन्वातुरस्य संशोधनसाध्यस्याऽयमेव संशोधनकालो नेत्याह—

**स्वस्थवृत्तमभिप्रेत्य व्याधौ व्याधिवशेन तु ॥ ३५ ॥**

स्वस्थावस्थामधिकृत्याऽयं संशोधनकाल उक्तः । व्याधौ चात्ययिके व्याध्यनुरोधेन शोधनकालः ।

यदि हेमन्तादावतिशीतोष्णादौ काले व्याधिः संशोधनसाध्यः सम्भवेत्तदा कथं संशोधनं कार्यमित्याह—

**कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम् ।**
**प्रयोजयेत्क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ ३६ ॥**

शीतोष्णवृष्टीनां प्रतीकारं कृत्रिमऋतुगुणं यथायथमुत्पाद्य संशोधनादिलक्षणां

क्रियां प्रयोजयेत्। कृत्रिमगुणोपधानं च यथा—हेमन्ते गर्भगृहादि। ग्रीष्मे धारागृहादीनि। क्रियाकालं न हापयेन्नातिक्रामयेदात्ययिकस्य व्याधेः प्राणहारित्वात्।

सम्प्रत्यौषधकालान् दर्शयन्नाह—

**युञ्ज्यादनन्नमन्नादौ मध्येऽन्ते कवलान्तरे।**
**ग्रासे ग्रासे मुहुः सान्नं सामुद्गं निशि चौषधम्॥ ३७॥**

दशैते औषधस्य कालाः। अनन्नमौषधं तदुच्यते यदुपयुज्य तस्मिन्परिणते भुञ्जीत। अन्नादौ तदुच्यते यदुपयुज्य समनन्तरमाहारोपयोगो विधीयते। मध्य इति। अन्नस्याहारस्य मध्ये यदौषधं भुज्यते। अन्तेऽवसाने। कवलान्तर इति। कवलयोर्ग्रासयोरन्तरे मध्ये न तु ग्रासमिश्रितं कृत्वेत्यर्थः। ग्रासे ग्रास इति। यद्वा ससम्पृक्तं भुज्यते। मुहुरिति। पुनः पुनर्भुक्तेऽभुक्ते वा यदौषधं भुज्यते। साऽन्नमिति। सहाऽन्नेनाऽऽहारेण यदौषधं भुज्यते। सामुद्गं तदुच्यते यदाहारस्य प्राक् पश्चाच्च प्रयुज्यते। तेन हि समुद्गपुटयुगलोपमेनौषधद्वयेनाहारो मध्ये क्रियते। समुद्गः सम्पुटकः। निशि यच्छयनवेलायां भुज्यते।

अधुना विषयविभागेन यस्मिन् व्याधौ यदुपयुज्यते तद्दर्शयति—

**कफोद्रेके गदेऽनन्नं बलिनो रोगरोगिणोः।**
**अन्नादौ विगुणेऽपाने समाने मध्य इष्यते॥ ३८॥**
**व्यानेऽन्ते प्रातराशस्य सायमाशस्य तूत्तरे।**
**ग्रासग्रासान्तयोः प्राणे प्रदुष्टे मातरिश्वनि॥ ३९॥**
**मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासिषु।**
**योज्यं सभोज्यं भैषज्यं भोज्यैश्चित्रैररोचके॥ ४०॥**

कफोद्रेके रोगे निरन्नमौषधं योज्यम्। कयोरित्याह। बलिनोरित्यादि। बलवति रोगे तत्केवलमन्नादिरहितमौषधम्। तद्धयनन्नमतिवीर्यं भवति। बलवांश्च यदि रोगी तदोपयुञ्जीत नतु दुर्बले। दुर्बलस्य त्वन्नसहितं न ग्लानिकरं भवति। अन्नादाविति। अपानाख्ये वायौ विगुणे कुपिते सत्यौषधं भुक्त्वा समनन्तरमेवाहार इष्यत इत्यर्थः। समाने वायौ विगुणे मध्ये भक्तस्यौषधमिष्यते। व्यानाख्ये विगुणे प्रातराशस्य पूर्वाह्णभुक्तस्यान्तेऽवसाने भेषजमिष्यते। सायमित्यादि। उत्तरे व्यानापेक्षयोदानाख्ये मरुति विगुणे सायमाशस्याऽपराह्णभुक्तस्य त्वन्ते भेषजमिष्यते। प्राणाख्ये मातरिश्वनि वाते प्रदुष्टे विकृते ग्रासग्रासान्तयोर्भेषजमिष्यते। ग्रासश्च ग्रासान्तश्च तयोस्तेन ग्राससम्पृक्तमौषधं ग्रासयोर्मध्ये भेषजमित्यवतिष्ठते। मुहुर्मुहुर्भुक्ते यदभुक्ते वा भेषजं तत्तु विषादिषु योज्यम्। अरोचकेऽरुचौ सह भोज्यैर्भैषज्यं योज्यम्। कीदृशैर्भोज्यैश्चित्रैरनेकविधैः।

**कम्पाऽऽक्षेपकहिध्मासु सामुद्गं लघुभोजिनाम्।**

सामुद्गं नाम यदादावन्ते चाऽहारस्य भुज्यते तत्कम्पादिषु प्रशस्यत इति वक्ष्य-

मार्गेण सम्बन्धः । केषाम् ? लघ्वन्नाशिनाम् ।

**ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते ॥ ४१ ॥**

ऊर्ध्वजत्रुविकारेषु शयनवेलायामौषधं प्रशस्यत इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां दोषोपक्रमणीयोनाम त्रयोदशोऽध्यायः ॥ १३ ॥

# चतुर्दशोऽध्यायः ।

दोषोपक्रमणीयादनन्तरं द्विविधोपक्रमणीयारम्भेऽयं सम्बन्धः । पूर्वं सामान्येनोपक्रमो दोषोपक्रमणीयेऽभिहितः । अत्र तूपक्रम्यस्य विशेषेणोपक्रमविशेष उच्यत इत्याह—

**अथाऽतो द्विविधोपक्रमणीयमध्यायं व्याख्यास्यामः ।**

द्विविधं द्विप्रकारं च तदुपक्रमणं च द्विविधोपक्रमणं तस्मै हितो द्विविधोपक्रमणीयः । शेषं पूर्ववत् ।

उपक्रमश्च समासतो द्विविधः । तन्त्रान्तरपठितानां चतुर्णामुपक्रमाणामत्रैवान्तरभावात् । अतएव सहेतुकमुपदिशन्नाह—

**उपक्रम्यस्य हि द्वित्वाद् द्विधैवोपक्रमो मतः ।**

हि यस्मादुपक्रम्यस्य चिकित्स्यस्य द्वित्वाद्धेतोरुपक्रमो द्विधैव मत इष्टः । एवशब्दोऽवधारणे परमतं क्षिपति ।

कथं द्विधेत्याह—

**एकः सन्तर्पणस्तत्र द्वितीयश्चाऽपतर्पणः ॥ १ ॥**
**बृंहणो लङ्घनश्चेति तत्पर्यायावुदाहृतौ ।**
**बृंहणं यद्बृहत्त्वाय लङ्घनं लाघवाय यत् ॥ २ ॥**
**देहस्य,**

तत्र तयोर्द्वयोरुपक्रमयोरेकः सन्तर्पणरूप उपक्रमो द्वितीयश्चाऽपतर्पणरूप उपक्रमः । बृंहणं लङ्घनं च तयोः सन्तर्पणाऽपतर्पणयोः पर्यायावुदाहृतौ । देहस्य बृंहणं तदुच्यते यद्देहस्य बृहत्वाय भवति । लङ्घनं तदुच्यते यद्देहस्य लाघवाय लाघवोत्पादनाय भवति ।

**भवतः प्रायो भौमापमितरच्च ते ।**

सन्तर्पणाऽपतर्पणे भौमापमितरच्च भवतः । भूमेरिदं भौमम् । अपामिदमापम् । भौमयुक्तमापं सन्तर्पणम् । इतरद्भौमापादन्यदग्निवाय्वाकाशात्मकमपतर्पणम् । प्रायोग्रहणात्किञ्चिद्भौममप्यपतर्पणम् । यथा यवमसूरमकुष्ठतण्डुलीयादि । तथाऽग्निपवनोत्कटस्याऽपि शुण्ठीपिप्पल्यादेर्वृष्यत्वेन सन्तर्पणकार्यदर्शनाच्च ।

अधुना स्नेहनादेश्चतुर्विधस्योपक्रमस्य सन्तर्पणाऽपतर्पणयोरेवान्तर्भावं दर्शयन्नाह--

**स्नेहनं रूक्षणं कर्म स्वेदनं स्तम्भनं च यत् ॥ ३ ॥**
**भूतानां तदपि द्वैध्याद् द्वितयं नाऽतिवर्तते ।**

स्नेहनादि यच्चतुर्विधं कर्म तदपि द्वितयं सन्तर्पणाऽपतर्पणरूपं नातिवर्तते नाऽतिक्रामति । कुतो हेतोरित्याह । भूतानां सन्तर्पणाऽपतर्पणरूपाद्द्वैध्याद् द्विप्रकारत्वात् ।

इदानीं प्रत्येकं तयोर्भेदानाह—

**शोधनं शमनं चेति द्विधा तत्राऽपि लङ्घनम् ॥ ४ ॥**

तत्र च तयोः सन्तर्पणाऽपतर्पणयोर्बृंहणलङ्घनाऽपरपर्याययोर्मध्याद्यल्लङ्घनमपतर्पणं तद्द्विधा । कथमित्याह । शोधनं शमनं चेति । इति हेत्वर्थे । यतः शोधनं शमनं च ततो द्विधेत्यर्थः ।

इदानीं शोधनस्य लक्षणं प्रभेदं चाऽधिकृत्याह—

**यदीरयेद्बहिर्दोषान्पञ्चधा शोधनं च तत् ।**

यदौषधं दोषान् वातादीनन्तः स्थितान् बहिरीरयेत् क्षिपेत्तच्छोधनम् । तच्च पञ्चधा पञ्चविधम् ।

तदेव पञ्चविधत्वमाह--

**निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः ॥ ५ ॥**

निरूहो बस्तिस्तथा वमनं तथा कायविरेकः शिरोविरेकश्च तथाऽस्रविस्रुती रक्तस्रावश्चेति पञ्चधा शोधनम् । सर्वशरीरस्य शिरःप्रभृतेरधो मलनिर्हरणं यत्स कायविरेकशब्देनोच्यते । यत्तु केवलं शिरःसंज्ञकस्य शरीरावयवस्य घ्राणेनोर्ध्वमलनिर्हरणं स शिरोविरेकः ।

सम्प्रति शमनाख्यस्य लक्षणं प्रभेदं चाधिकृत्याह--

**न शोधयति यद्दोषान् समान्नोदीरयत्यपि ।**
**समीकरोति विषमान् शमनं तच्च सप्तधा ॥ ६ ॥**
**पाचनं दीपनं क्षुत्तृड्व्यायामाऽऽतपमारुताः ।**

यदौषधं दोषान् वातादीन्न शोधयति नान्तःस्थितान्बहिर्निष्कासयति तथा समान् स्वप्रमाणस्थान्नोदीरयति नोत्क्लेशयति विषमांश्च स्वप्रमाणाद्धीनाधिकभावावस्थितान् समीकरोति स्वप्रमाणस्थान् विदधाति तच्छमनमुच्यते । तच्च सप्तधा सप्तप्रकारं पाचनादिभेदेन । पाचयतीति पाचनम् । पचतोऽग्नेः पक्तुं शक्तिमधिकां यदुत्पादयति तद् द्रव्यं क्रिया वा पाचनमुच्यते । यथा लङ्घनं किराततिक्ताख्यं मुस्तादि वा । दीपनं यथा घृतादि । तन्त्रान्तरे च दीपनपाचनयोर्लक्षणमुक्तम् । क्षारपाणिनाऽप्युक्तम् । "पाचनं पाचयेद्दोषान् सामान् शमनमेव तु । दीपनं ह्यग्नि-

कृच्चामं कदाचित्पाचयेन्न वा । यथा—"यदग्निकृत्पचेन्नामं दीपनं तद्यथा घृतम् । पाचनं तद्विपर्यस्तं यथा वक्ष्यामि लक्षणमिति" । क्षुत्तृट्शब्दाभ्यां क्षुत्तृष्णानिग्रहाविह गृहीतौ ।

पाचनादीनां दोषशमनत्वमुक्तं तच्च वाते वातपित्ते च न सम्भवतीत्याह—

**बृंहणं शमनं त्वेव वायोः पित्तानिलस्य च ॥ ७ ॥**

तुशब्दो विशेषे । विशेषस्तु लङ्घनापेक्षया । शोधनं शमनं चेति द्विधा लङ्घनमुक्तम् । बृंहणमपि शोधनं भवति दुग्धादिद्रव्यं शोधनस्वभावद्रव्यत्वात् । तेन तथाविधेन द्रव्येण केवलस्य वातस्य पित्तयुक्तस्य वा कोप आशङ्क्यते । यथा लङ्घनशोधनद्रव्येण हरीतक्यादिना ततो बृंहणस्य विशेषणार्थस्तुशब्दः कृतः । बृंहणं यतः शोधनं मरुतः केवलस्य पित्तसहितस्य वा शमनं नतु लङ्घनशोधनवत्कोपनम् । एवकारोऽवधारणार्थः । बृंहणं यच्छोधनरूपं शोधनं वातस्य पित्तयुक्तस्य वा शमनमेव न कोपनं जातुचिदित्यर्थः । लङ्घनं तूभयरूपमपि वातस्य वातपित्तयोर्वा कोपनमेव ।

इदानीं ये बृंह्यास्तानाह—

**बृंहयेद्व्याधिभैषज्यमद्यस्त्रीशोककर्शितान् ।**
**भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान् ॥ ८ ॥**
**गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानपि ।**

कर्शितशब्दस्य व्याध्यादिभिः प्रत्येकं सम्बन्धः । व्याधिकर्शितान् बृंहयेदेवं शेषेष्वपि योज्यम् । भारादिभिः क्षीणस्य प्रत्येकं सम्बन्धः । भारक्षीणान् बृंहयेत् । एवं शेषेषु । रूक्षादीन् बृंहयेत् । ग्रीष्मेऽपरानप्यन्यानप्युक्तानपि बृंहयेत् । इत्थं च ग्रीष्मेऽपि सर्वानपि बृंहयेदिति विशेषेण तु व्याधिकर्शितादीन् ।

कैर्बृंहयेदित्याह—

**मांसक्षीरसितासर्पिर्मधुरस्निग्धबस्तिभिः ॥ ९ ॥**
**स्वप्नशय्यासुखाऽभ्यङ्गस्नाननिर्वृतिहर्षणैः ।**

मांसादिभिर्बृंहयेत् । मधुरस्निग्धैर्बस्तिभिर्न तु रूक्षतीक्ष्णैस्तेषामपतर्पणस्वभावत्वात् । स्वप्नो निद्रा । शय्यासुखं खट्वाजनितं शर्म । निर्वृतिश्चित्तस्याऽनाकुलत्वम् ।

**मेहाऽऽमदोषोऽतिस्निग्धज्वरोरुस्तम्भकुष्ठिनः ॥ १० ॥**
**विसर्पविद्रधिप्लीहाशिरःकण्ठाऽक्षिरोगिणः ।**
**स्थूलाँश्च लङ्घयेन्नित्यं शिशिरे त्वपरानपि ॥ ११ ॥**

मेहादीनामिनिर्मत्वर्थीयः । मेहिप्रभृतीनि लङ्घयेत् । शिशिरे पुनरन्यानप्यपरानपीति व्याधितानां ग्रहणम् । स्वस्थानां तु शिशिरे हेमन्तविधिर्विशेषेणोक्त एव । शिशिरशब्दः शीतमात्रोपलक्षणार्थः । तेन हेमन्तेऽपि लङ्घयेदित्यर्थ उपलभ्यते ।

२८



पूर्वमुक्तं लङ्घनं द्विधा। शोधनं शमनं चेति। तत्र शोधनविषयं निरूपयन्नाह–

**तत्र संशोधनैः स्थौल्यबलापित्तकफाऽधिकान्।**
**आमदोषज्वरच्छर्दिरतीसारहृदामयैः॥ १२॥**
**विबन्धगौरवोद्गारहृल्लासादिभिरातुरान्।**
**मध्यस्थौल्यादिकान् प्रायः पूर्वं पाचनदीपनैः॥ १३॥**
**एभिरेवाऽऽमयैरार्तान् हीनस्थौल्यबलादिकान्।**
**क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान्मध्यबलैर्दृढान्॥ १४॥**
**समीरणाऽऽतपाऽऽयासैः किमुताऽल्पबलैर्नरान्।**

लङ्घयेदिति वर्तते। तत्र तेषु लङ्घनीयेषु मध्ये संशोधनाख्यैर्लङ्घनैः स्थौल्याद्यधिकान् तथाऽऽमदोषादिभिरार्तान् लङ्घयेत्। तथा मध्यस्थौल्यबलपित्तकफानेभिरेवाऽऽमदोषज्वरादिभिर्गदैरातुरान् प्रायः पूर्वं पाचनदीपनैर्लङ्घनभेदैर्लङ्घयेत्। प्रायोग्रहणं देशकालाद्यपेक्षया नियमस्याऽसर्वविषयत्वज्ञापनार्थम्। हीनस्थौल्यबलादिकांस्तु सतः क्षुत्तृष्णानिग्रहैर्बुभुक्षापिपासावेगविधारणाख्यैर्लङ्घनविशेषैर्लङ्घयेत्। दोषैर्वातपित्तकफैर्मध्यबलैरार्तान् तथा दृढान् शक्तान् समीरणादिभिर्लङ्घयेत्। आयासो व्यायामः। किमुत किम्पुनरल्पबलैर्दोषैरार्तान् समीरणादिभिर्लङ्घयेत्। सुतरां तु हीनबलैरार्तान् समीरणादिभिरेव लङ्घयेदित्यर्थः।

**न बृंहयेल्लङ्घनीयान्,**

लङ्घनीयान् लङ्घनार्हान् मेहामदोषादीन्न बृंहयेत्।

तर्हि बृंह्यस्य वातलादेर्यदा ज्वरादिव्याधिर्लङ्घनसाध्यो जायते तदा किं लङ्घनं कार्यमुत बृंहणमित्यत्र संशय इत्याह–

**बृंह्यांस्तु मृदु लङ्घयेत्॥ १५॥**
**युक्त्या वा देशकालादिबलतस्तानुपाचरेत्।**

ये पुनर्बृंह्यास्तान् लङ्घनसाध्यामयार्तान् मृदु कृत्वा लङ्घयेत्। मृदुना लङ्घनप्रकारेणाऽपतर्पयेदित्यर्थः। युक्त्या वा प्रयोगेण सन्तर्पणाऽपतर्पणव्यामिश्रलक्षणेन देशकालादीनां बलतोऽनुरोधेन तानुपाचरेदुपक्रमेत्। नैव लङ्घयेदित्यर्थः। आदिग्रहणेन सत्वसात्म्यादिग्रहणम्।

बृंहितलङ्घितयोः किं लक्षणमित्याह—

**बृंहिते स्याद्बलं पुष्टिस्तत्साध्यामयसंक्षयः॥ १६॥**

बृंहिते सति बलं पुष्टिश्च स्यात्। तथा बृंहणसाध्या य आमयास्तेषां संक्षयो विनाशो भवेत्।

सम्प्रति लङ्घितलक्षणमाह—

**विमलेन्द्रियता सर्गो मलानां लाघवं रुचिः।**
**क्षुत्तृट्सहोदयः शुद्धहृदयोद्गारकण्ठता॥ १७॥**



**व्याधिमार्दवमुत्साहस्तन्द्रानाशश्च लङ्घिते।**

विमलेन्द्रियतादिस्तन्द्रानाशश्चेत्यन्तो ग्रन्थो लङ्घितलक्षणम्। विमलेन्द्रियता करणपाटवम्। क्षुत्तृषोः सहैककालमुदयः। शुद्धहृदयेति। हृदयं चोद्गारश्च कण्ठश्च हृदयोद्गारकण्ठं शुद्धं च तद्धृदयोद्गारकण्ठं च तस्य भावः शुद्धहृदयोद्गारकण्ठता। विमलेन्द्रियतादीनां पदानामकृतसमासानामेव समस्तानां निर्देशो दोषदेशाद्यनुरोधेनैकस्य द्वयोस्त्रिचतुराणां बहुतराणां सर्वेषां च लंङ्घितलक्षणत्वद्योतनार्थः। अन्यथा सर्वेषां लक्षणानामुत्पत्तौ लङ्घितलक्षणत्वं भवेन्न त्वेकस्य द्वयोर्बहूनां चोत्पत्तौ लङ्घितलक्षणत्वं स्यात्। मुनिरप्यनेनैव हेतुनाऽसमासेनैव लक्षणं व्यधत्त। तथा—"वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे। हृदयोद्गारकण्ठस्य शुद्धौ तन्द्राक्लमे गले। स्वेदे जाते रुचौ चैव क्षुत्पिपासा सहोदये। कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनीति"।

**अनपेक्षितमात्रादिसेविते कुरुतस्तु ते॥ १८॥**
**अतिस्थौल्याऽतिकार्श्यादीन् वक्ष्यते ते च सौषधाः।**

ते बृंहणलङ्घने अनपेक्षितमात्रादिसेविते अतिस्थौल्याऽतिकार्श्यादीन् कुरुतः। अनपेक्षिताश्च ते मात्रादयश्चाऽनपेक्षितमात्रादयस्तैः सेविते। मात्राद्यनपेक्षया कृते इत्यर्थ। ते चाऽतिस्थौल्याऽतिकार्श्यादयः सौषधाः सभेषजा वक्ष्यन्ते पुरस्ताद्भणिष्यन्ते।

अथातिबृंहितलङ्घितयोः किं लक्षणमित्याह—

**रूपं तैरेव च ज्ञेयमतिबृंहितलङ्घिते॥ १६॥**

अतिबृंहितश्चातिलङ्घितश्चेत्येकवद्भावः। अतिबृंहितेऽतिलङ्घिते च तैरेवाऽतिस्थौल्यादिभिस्तथाऽतिकार्श्यादिभिश्च रूपं बृंहणलङ्घनाऽतियोगलक्षणं वेद्यम्। चशब्दः समुच्चये।

तानेवाऽतिस्थौल्यादीनाह—

**अतिस्थौल्यापचीमेहज्वरोदरभगन्दरान्।**
**काससंन्यासकृच्छ्रामकुष्ठादीनतिदारुणान्॥ २०॥**

अतिस्थौल्यादीनतिबृंहितं कर्तृ कुरुते, इत्यनुपात्तेनाऽपि प्रकृतत्वादत्र कर्तृपदेन क्रियापदेन च सम्बन्धः कार्यः। अत एव तदपेक्षयाऽतिस्थौल्यादीनां द्वितीया। अथवा योग्यतयैवाऽनुपात्तेनाऽपि क्रियादीनां सम्बन्धो भवत्येव। सुकविलक्षणस्यैवं स्थितत्वात्। तथा च भगवतो व्यासस्य-"यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्येन सर्वस्य कटुरेव सः"। अत्र हि च्छेदसेकालङ्कारक्रिया अपेक्ष्य निम्बादीनां द्वितीयाऽर्थसम्बन्धश्च।

अथैषां स्थौल्यादीनामुपक्रममाह—

**तत्र मेदोऽनिलश्लेष्मनाशनं सर्वमिष्यते।**



तेष्वतिस्थौल्यादिषु मेदोऽनिलश्लेष्मनाशनं सर्वमन्नपानौषधमिष्यते। किं तदिति ब्रूते—

कुलत्थजूर्णश्यामाकयवमुद्गमधूदकम् ॥ २१ ॥
मस्तुदण्डाहतारिष्टचिन्ताशोधनजागरम्।
मधुना त्रिफलां लिह्याद् गुडूचीमभयां घनम् ॥ २२ ॥
रसाञ्जनस्य महतः पञ्चमूलस्य गुग्गुलोः।
शिलाजतुप्रयोगश्च साग्निमन्थरसो हितः ॥ २३ ॥
विडङ्गं नागरं क्षारः काललोहरजो मधु।
यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित् ॥ २४ ॥

कुलत्थादिकं स्थूलायेष्यते। जूर्णस्तृणधान्यविशेषो दक्षिणापथे जोन्धलकं इति प्रसिद्धः। दण्डाहतं मथितम्। त्रिफलादीनामन्यतमं मधुना लिह्यात्। तथा रसाञ्जनादेश्च प्रयोगोऽग्निमन्थरससहितो हितोऽतिस्थूलायेति प्रकृतेन योज्यम्। विडङ्गादियोगः सर्वसमभागोऽतिस्थौल्यदोषजित्।

व्योषकट्वीवराशिग्रुविडङ्गाऽतिविषास्थिराः।
हिंगुसौवर्चलाजाजीयवानीधान्यचित्रकाः ॥ २५ ॥
निशे बृहत्यौ हपुषा पाठा मूलं केम्बुकात्।
एषां चूर्णं मधु घृतं तैलं च सदृशांशकम् ॥ २६ ॥
सक्तुभिः षोडशगुणैर्युक्तं पीतं निहन्ति तत्।
अतिस्थौल्यादिकान् सर्वान् रोगानन्यांश्च तद्विधान् ॥ २७ ॥
हृद्रोगकामलाश्वित्रश्वासकासगलग्रहान्।
बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनम् ॥ २८ ॥

व्योषादीनि द्रव्याणि चतुर्विंशतिः परस्परसमभागानीत्येको भागः। तत्समो मधुनो द्वितीयो भागो घृतस्य तृतीयस्तैलस्य चतुर्थः। एषां सर्वेषां मिश्रीभूतानां षोडशगुणा यवसक्तवः। तदेतत्पीतमतिस्थौल्यादिकान् पूर्वोक्तान् सर्वान् रोगान्नि-हन्ति। अन्यांश्च तथाविधान् रोगान् बृंहणोत्थानित्यर्थः। तथा हृद्रोगादीन् नि-हन्ति। तथा बुद्ध्यादिकरम्। सन्नस्य मन्दस्याऽग्नेर्दीपनं च।

साम्प्रतमतिलङ्घनोत्थान् रोगान् सौषधादीनाह।

अतिकार्श्यं भ्रमः कासतृष्णाधिक्यमरोचकः।
स्नेहाऽग्निनिद्रादृक्श्रोत्रशुक्रौजःक्षुत्स्वरक्षयः ॥ २९ ॥
बस्तिहृन्मूर्धजंङ्घोरुत्रिकपार्श्वरुजा ज्वरः।
प्रलापोऽधोनिलोग्लानिश्छर्दिः पर्वास्थिभेदनम् ॥ ३० ॥
विण्मूत्रादिग्रहाद्याश्च जायन्तेऽतिविलङ्घनात्।

अतिकार्श्यादयोऽतिविलङ्घनाज्जायन्ते। स्नेहादीनां क्षयशब्देन समासः।

बस्त्यादीनां च रुजाशब्देन । मूत्रादिग्रहाद्यारचेत्याद्यशब्देन नानाविधानां वातरोगाणां ग्रहणम् ।

यद्यपि कार्श्याख्योऽयं महान्दोषस्तथापि स्थौल्यमपेक्ष्य वर एवेति प्रतिपादयन्नाह–

**कार्श्यमेव वरं स्थौल्यात्,**

अत्र चातिकार्श्यमेव वरमतिस्थौल्यादिति वेद्यम् । न कार्श्यमात्रं स्थौल्यमात्रं वा । यस्मादतिस्थूलातिकृशावेव लङ्घनबृंहणाभ्यामुपक्रम्यावत्र विवक्षितौ न स्थूलकृशौ सामान्येन ।

कार्श्यमेव स्थौल्याद्वरं कुत इत्याह–

**नहि स्थूलस्य भेषजम् ॥ ३१ ॥**

**बृंहणं लङ्घनं नालमतिमेदोऽग्निवातजित् ।**

यस्मात् स्थूलस्य भेषजं बृंहणं नालं न समर्थं न च लङ्घनं समर्थम् । यस्मात्स्थूलस्य भेषजमतिमेदोऽग्निवातजित् । यन्मेदः क्षपणं भवति तदग्निनाशकृद्वातहृच्च न । स्थूलस्य हि बृंहणेन मेदोऽतितरामुपचीयते लङ्घनेन मेदःक्षपणं भवति किन्त्वग्निपवनावुपचीयेते । तस्माद्बृंहणं मांसक्षीरादि यच्च लङ्घनं कोद्रवश्यामाकादि तत्पूर्वस्माद्धेतोः स्थूलस्य न भेषजम् ।

**मधुरस्निग्धसौहित्यैर्यत्सौख्येन विनश्यति ॥ ३२ ॥**
**कृशिमा स्थविमाऽत्यन्तविपरीतनिषेवणैः ।**

यतो यस्मात्कृशिमा मधुरस्निग्धतृप्तिभिः सौख्येनानायासेन नश्यति शाम्यति तस्मात्कार्श्यं स्थौल्याद्वरम् । यतश्च स्थविमा स्थूलत्वमत्यन्तविपरीतनिषेवणैः शाम्यति । अत्यन्तविपरीतानां निषेवणान्यत्यन्तविपरीतनिषेवणानि तैस्तिक्तकटुकषायप्रायैरन्नपानौषधसेवनैः शाम्यतीत्यर्थः । स्थूलकृशयोश्च यदि बृंहणसाध्यस्तुल्यो व्याधिः स्यात्ततः स्थूलस्योपक्रमविरोधात्तथा सुखेन न शाम्यति । यथा कृशस्य लङ्घनसाध्यो विसूचिकादिर्यदि चैतयोः स्यात् सोऽपि कृशस्य सुखेनोपशाम्यति । स्थूलस्य विरुद्धोपक्रमत्वाद्दुःखेन शाम्यति । तथा ह्यत्र प्रधानोपक्रमः स्वेदः स च तावन्न घटते । न स्वेदयेदतिस्थूलमिति निषेधात् । अथैनं लङ्घयति तदा । "स्रोतःसु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः । चरन् प्रज्वलयत्यग्निं क्षुत्तृषौ स्तस्ततोऽधिकम् । स्थूलं कोटरवद्वृद्धौ दहतोऽग्न्यनिलौ च तौ" । इत्यादिना यावद्वातसखेन वनवह्निना वनस्येवाऽस्य महती व्यापदुत्पद्यते । अथ बृंहणोपक्रमः क्रियते तदाऽऽमदोषो वर्धेत । कृशस्य त्वविरुद्धोपक्रमत्वाद्विसूचिकादिः सुखेनोपक्रम्यस्तस्मात्कार्श्यमेव स्थौल्याद्वरम् । कृशिमेति कृशशब्दात्पृथ्वादिपाठादिमनिच् । रऋतो हलादेरिति रेफादेशः । स्थविमेति दृढादेराकृतिगणत्वादिमनिजिति केचित् । तस्मिंश्च सति स्थूलदूरेति यणादिपरस्य लोपः । ऋकारस्य च गुणः ।

अथ कृशे कीदृशं भेषजमित्याह—

**योजयेद्बृंहणं तत्र सर्वं पानान्नभेषजम् ॥ ३३ ॥**

तत्र कृशे बृंहणं सर्वं पानाद्यौषधं योज्यम्—

**अचिन्तया हर्षणेन ध्रुवं सन्तर्पणेन च।**
**स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यति ॥ ३४ ॥**

अचिन्तया चेतसः शोककार्याद्यनाकुलत्वेन तथा हर्षणेन चित्तस्य तुष्ट्या तथा सन्तर्पणेनाऽऽहारविशेषादिना बृंहणेन तथा स्वप्नप्रसङ्गादतिनिद्रासेवनेन कृशः पुष्यति सर्वोपचितधातुः सम्पद्यते। क इव? वराहः शूकरो यथा। अन्येभ्यश्च पुष्टिहेतुभ्यः कृशविषये स्वप्न एव प्रधान इति च दर्शयितुं वराहो दृष्टान्तत्वेनोपन्यस्तो ग्रन्थकृता। तथाहि—' वराहस्य स्वप्नमन्तरेण न कश्चित्तथाविधोऽभ्यवहारादिरूपलभ्यते। यथाऽसौ पुष्टोऽतिमेदरो दृश्यते '। अतिस्थूलाऽतिकृशयोश्च मुनिना लक्षणमभ्यधायि—" मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः। अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते "। तथा—" शुष्कस्फिगुदरग्रीवो धमनीजालसन्ततः। त्वगस्थिशेषोऽतिकृशः स्थूलपर्वा नरो मत " इति।

**नहि मांससमं किञ्चिदन्यद्देहबृहत्त्वकृत्।**
**मांसादमांसं मांसेन सम्भृतत्वाद्विशेषतः ॥ ३५ ॥**

मांसेन सममपरं देहबृहत्त्वकरं नच विद्यते। सर्वबृंहणत्वकरेभ्यो मांसमतिबृंहणमित्यर्थः। विशेषेण मांसादमांसं देहस्य बृंहणत्वकृत्। कुत इत्याह—मांसेन सम्भृतत्वात् पुष्टत्वात्।

एवं विस्तरेण स्थूलकृशयोरुपक्रममुक्त्वा समासेनाह—

**गुरु चाऽतर्पणं स्थूले विपरीतं हितं कृशे।**

यद्गुरु तथाऽपतर्पणं तत्समासेन स्थूलाय हितं माक्षिकशालूकादि। एतद्धि रौक्ष्यान्मेदः क्षपयति। गौरवाच्च शीघ्रं जरां न गच्छति। यदतो विपरीतं लघु सन्तर्पणं च तदतिकृशाय हितं शालिषष्टिकैणेयमांसलावकपिञ्जलादिकम्। अतिकृशस्य ह्यग्निरपि कृशो भवति। तस्माद्यदि तस्य गुर्वन्नपानौषधमुपयुज्यते ततोऽग्निसादोऽस्य जायते। अथाऽस्य लघु अपतर्पणमुपयुज्यते तद्भूयः कार्श्यमेवाऽस्यापद्यते। तस्माल्लघु सन्तर्पणं च यत्तत्कृशाय हितम्। गुरु चेत्यत्र चशब्दाल्लघु च यदपतर्पणं श्यामाककोरदूषादिकं तथाऽन्यदपि यन्न गुरु नच लघु मेदोघ्नं जागरव्यवायव्यायामचिन्तादिकं तच्च स्थूले हितं गमयति।

**यवगोधूममुभयोस्तद्योग्याऽऽहितकल्पनम् ॥ ३६ ॥**

उभयोः स्थूलकृशयोर्यवगोधूमं हितम्। किम्भूतं यवगोधूममित्याह—तद्योग्येत्यादि। तयोः स्थूलकृशयोर्योग्या उचिताऽऽहिता कृता कल्पना संयोगसंस्कारादिनो-

पयोग उपायो वा यस्मिन् यवे गोधूमे च। तदेवं यवाः स्थूले हिताः, गोधूमाः कृशे, इत्यर्थः। 'हितयोगे चतुर्थी वक्तव्येत्यस्य प्रायिकत्वात् स्थूले हितमित्यत्र न चतुर्थी'। अन्येऽपि ह्येवं प्रयोगा दृश्यन्ते। यथा रुद्रटस्य—"सामा जाथीमतां हितमिति"। तथाऽस्यैव—'विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता। व्रणाऽक्षिरोगसंशुद्धदुर्बलस्नेहपायिनामिति'।

ननु चाऽतीसारज्वरगुल्मादीनामनेकरूपत्वादनन्ता एवोपक्रमाः प्राप्तास्तत्कथमुपक्रम्यस्य हि द्वित्वाद् द्विधैवोपक्रमो मत इत्याह—

**दोषगत्याऽतिरिच्यन्ते ग्राहिभेद्यादिभेदतः।**
**उपक्रमा न ते द्वित्वाद्भिन्ना अपि गदा इव ॥ ३७ ॥**

दोषाणां पृथग्रूपाणां संसर्गसन्निपाततरतमभेदेनाऽऽनन्त्यं यातानां या गतिस्तथा तेषामेव स्थानवृद्धिक्षयलक्षणा या गतिस्तिर्यगूर्ध्वाधोलक्षणा या गतिस्तथा शाखाकोष्ठास्थिसन्धिलक्षणा च या गतिस्तयाऽतिरिच्यन्ते बहवो भवन्त्युपक्रमाः। कथमित्याह—ग्राहिभेद्यादिभेदतः। ग्राही च भेदी च ग्राहिभेदिनौ तावादी येषां रोगानुरोधान्नानाविधानामुपक्रमाणां ते ग्राहिभेद्यादयस्तेषां भेदो विशेषो ग्राहिभेद्यादिभेदस्तस्मात्। यद्यप्यतिरिच्यन्तेऽनन्ताः सम्पद्यन्ते तथाऽपि द्वित्वात्सन्तर्पणाऽपतर्पणरूपान्न तेऽतिरिच्यन्ते। सन्तर्पणरूपत्वमपतर्पणरूपत्वं वा वर्जयित्वा न तेषामुपक्रमाणां रूपान्तरं सम्भवतीत्यर्थः। कथमिव नाऽतिरिच्यन्त इत्याह—भिन्ना अपि गदा इव। यथा वातादिदोषवशान्नानाविधा अपि ज्वरादयो बृंहणलङ्घनसाध्यत्वं सामत्वं निरामत्वं वा नातिवर्तन्ते तथोपक्रमा अपीति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां द्विविधोपक्रमणीयो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

# पंचदशोऽध्यायः ।

द्विविधोपक्रमणीयाध्यायादनन्तरं शोधनादिगणसङ्ग्रहाध्यायारम्भः। यतो दोषोपक्रमणीये द्विविधोपक्रमणीये च नानाविधा उपक्रमा अभिहितास्ते च मदनमधुकादिभेषजाश्रया अतस्तानि शोधनान्युपयोगीनि सर्वोपक्रमाधिकारीणि सञ्जिघृक्षुरध्यायमिममारेभे।

**अथाऽतः शोधनादिगणसङ्ग्रहमध्यायं व्याख्यास्यामः।**

शोधनं शोधनरूपो द्रव्यगण आदिर्येषां त एवम्। आदिशब्देन वातहरादिगणपरिग्रहः। तेषां सङ्ग्रहो यस्मिन्नध्याये स शोधनादिगणसङ्ग्रहस्तं शोधनादि-

---

मौ० टि०—१. चरकस्तु षड्विधानुपक्रमानाह। यथा—'लङ्घनं बृंहणं काले रूक्षणं स्नेहनं तथा। स्वेदनं स्तम्भनं चैव जानीते यः स वै भिषक्'। (च०सू०२२अ०)

गणसङ्ग्रहसंज्ञमध्यायं व्याख्यास्यामः । गणः समूहः । विक्षिप्तानां पदार्थानामेकत्र राशीकरणं सङ्ग्रहः । तत्र शोधनगणस्य सर्वदोषविजयत्वेन प्राधान्यात्पूर्वमुपन्यासः ।

शोधनं च चतुर्विधम् । वमनविरेचनास्थापनशिरोविरेचनद्रव्यभेदेन । तत्रापि वमनस्यौषधगणं तावत्पूर्वं वक्ति—

**मदनमधुकलम्बानिम्बबिम्बीविशाला**
**त्रपुसकुटजमूर्वादेवदालीकृमिघ्नम् ।**
**विदुलदहनचित्राः कोशवत्यौ करञ्जः**
**कणलवणवचैलासर्षपाश्छर्दनानि ॥ १ ॥**

मदनं रावः । मधुकं मधुयष्टिका । लम्बा तुम्बी दीर्घतिक्ताऽलाबुसंज्ञा । निम्बः पिचुमन्दः । बिम्बी गोह्ला ओष्ठोपमफलसंज्ञा । विशाला इन्द्रवारुणी । त्रपुसं तिक्तत्रपु संवेद्यम् । तस्य वमने योग्यत्वात् । कुटजं वत्सकम् । मूर्वा पीलुपर्णी । देवदाली घरङ्करा । कृमिघ्नं विडङ्गम् । विदुलो जलवेतसः । दहनश्चित्रकः । चित्रा मूषिकपर्णी । कोशवत्यौ घण्टालिकैका धामार्गवो, द्वितीया राजकोशातकी । करञ्जो नक्तमालम् । कणः पिप्पली । लवणं सैन्धवम् । वचा गोलोमी । एला त्रुटिः । सर्षपो रक्षोघ्नः । एतानि मदनादीनि छर्दनानि छर्दिं कुर्वन्ति छर्दिकराणि । अत्र मदनविशालात्रपुसकुटजविडङ्गैलासर्षपाणां फलानि वमनकृन्ति । मधुकविदुलचित्रकदन्तीवचानां तु मूलानि । रोध्रसुवर्णक्षीरीकम्पिल्लानां त्वचो रेचनाः । शेषाणां फलपत्रपुष्पाणीति । "वसुमुनिविरतिश्चेन्मालिनी नौ मयौ यः" ।

**निकुम्भकुम्भत्रिफलागवाक्षीस्नुक्शङ्खिनीनीलिनितिल्वकानि ।**
**शम्याककम्पिल्लकहेमदुग्धा दुग्धं च मूत्रं च विरेचनानि ॥ २ ॥**

निकुम्भो दन्ती । कुम्भिस्त्रिवृत् । त्रिफला वरा । गवाक्षी विशाला द्वितीयेन्द्रवारुणी । स्नुग्गुडा । शङ्खिनी यवतिक्ता । नीलिनी नीलपुष्पा भारवाहीसंज्ञा । तिल्वको रोध्रः । शम्याकः कर्णिकारः । कम्पिल्लको रञ्जनकः । हेमदुग्धा कनकक्षीरी । दुग्धं क्षीरम् । मूत्रं प्रसिद्धम् । निकुम्भादीन्येतानि विरेचनानि । उपजातिर्वृत्तम् ।

**मदनकुटजकुष्ठदेवदालीमधुकवचादशमूलदारुरास्नाः ।**
**यवमिसिकृतवेधनं कुलत्थो मधु लवणं त्रिवृता निरूहणानि ॥ ३ ॥**

मदनं मदनफलम् । कुटजं वत्सत्वक् । कुष्ठं गदनाम । दारु देवदारु । रास्ना युक्तरसा । मिसिः शतपुष्पा । कृतवेधनं धामार्गवः । निरूहणानि निरूहणसाधनानि । "भवति जगति नौ ततः परौ यौ नजसहितैर्जरगैश्च पुष्पिताग्रा" ।

**वेल्लाऽपामार्गव्योषदार्वी सुराला बीजं शैरीषं बार्हतं शैग्रवं च ।**

सारो माधूकः सैन्धवं तार्द्यशैलं त्रुट्यौ पृथ्वीका शोधयन्त्युत्तमाङ्गम्॥४॥

वेल्लो विडङ्गः। अपामार्गः प्रत्यक्पुष्पी। व्योषं त्रिकटुकम्। दार्वी पीतद्रुः। सुराला श्रेष्ठसर्जरसः। शिरीषबीजं शैरीषम्। बृहत्या बीजं बार्हतम्। शिग्रोर्बीजं शैग्रवम्। सारो माधूको मधुपुष्पसारः। सैन्धवं सिन्धूत्थम्। तार्क्ष्यशैलं शुष्करसाञ्जनम्। त्रुट्यौ सूक्ष्मैला स्थूलैला च। पृथ्वीका हिङ्गुपत्री। एतान्युत्तमाङ्गं शोधयन्ति। मूर्धविरेचनानीत्यर्थः। " मौ यौ पञ्चाश्वैर्वैश्वदेवीति नाम्ना "।

भद्रदारु नतं कुष्ठं दशमूलं बलाद्वयम्।
वायुं वीरतरादिश्च विदार्यादिश्च नाशयेत्॥५॥

भद्रदारु द्रुकिलिमम्। नतं तगरम्। कुष्ठं गदः। दशमूलं द्विपञ्चमूलम्। बलाद्वयं बलाऽतिबला च। एतानि भद्रदार्वादीनि तथा वक्ष्यमाणो वीरतरादिर्विदार्यादिश्च गणो वायुं नाशयति।

दूर्वाऽनन्ता निम्बवासाऽऽत्मगुप्ता गुन्द्राऽभीरुः शीतपाकी प्रियङ्गुः।
न्यग्रोधादिः पद्मकादिः स्थिरे द्वे पद्मं वन्यं सारिवादिश्च पित्तम्॥६॥

दूर्वा शाद्वलम्। अनन्ता यवासः। निम्बः प्रसिद्धः। वासा आटरूषकः। आत्मगुप्ता कपिकच्छूः। गुन्द्रा पदएरकः। अभीरुः शतावरी। शीतपाकी शिखण्डिका काकणन्तिकाभेदः। प्रियङ्गुः श्यामा। एष दूर्वादिगणस्तथा वक्ष्यमाणो न्यग्रोधादिस्तथा पद्मकादिर्गणस्तथा शालिपर्णीपृश्निपर्ण्यौ। तथा पद्मं जलजं, वन्यं कुटन्नटं, सारिवादिश्च गणः। एते पित्तं नाशयन्ति। ' म्तौ तो गौ चेच्छालिनी वेदलोकैः "।

आरग्वधादिरर्कादिर्मुष्ककाद्योऽसनादिकः।
सुरसादिः समुस्तादिर्वत्सकादिर्बलासजित्॥७॥

आरग्वधाद्यादयो गणाः सप्तैते बलासं श्लेष्माणं जयन्ति।

जीवन्ती काकोल्यौ मेदे द्वे मुद्गमाषपर्ण्यौ च।
ऋषभकजीवकमधुकं चेति गणो जीवनीयाख्यः॥८॥

जीवन्त्यादिर्गणो जीवनीयसंज्ञः। उदाहरणमात्रं चेदम्। धीमता स्वादुशीतस्निग्धादीन् जीवन्त्यादिषु साधारणगुणानालोच्य क्षीरेक्षुद्राक्षाऽक्षोडविदार्यादिषु तद्गुणेषु जीवनीयादित्वमवधारयितुं युक्तमिति। जीवन्ती जीववर्धना। काकोल्यौ द्वे एका काकोली कवडीसंज्ञा। अन्या क्षीरकाकोली पयस्विनीसंज्ञा। द्वे मेदे एका मेदा मणिच्छिद्रसंज्ञा। अन्या महामेदा वृक्षसहासंज्ञा। मुद्गपर्ण्यादीनां प्रागुक्तानि नामानि। "द्वयन्तान्तरादिगुरुभिः सोदधिलैः सप्तभिर्गणैर्गुरुणा। आर्यार्धे नाऽत्रायुजि जः षष्ठोऽयं नलघुकौ वा"।

विदारिपञ्चाङ्गुलवृश्चिकाली वृश्चीवदेवाह्वयशूर्पपर्ण्यः।





कण्डूकरी जीवनह्रस्वसंज्ञे द्वे पञ्चके गोपसुता त्रिपादी ॥ ९ ॥
विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा ।
शोषगुल्माऽङ्गमर्दोर्ध्वश्वासकासहरो गणः ॥ १० ॥

विदारी वृष्यकन्दा । पञ्चाङ्गुल एरण्डः । वृश्चिकाल्युष्ट्रधूमको मेषशृङ्गी । वृश्चीवः क्षुद्रवर्षाभूः । देवाह्वयः सुरदारुः । देवाद्वयेति पाठे एका सहदेवा द्वितीया विश्वदेवा चेति देवाद्वयम् । शूर्पपर्णी मुद्गपर्णी तथा माषपर्णी च । कण्डूकरी कपिकच्छूः। जीवनेत्यादि । "अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् । जीवनाख्यमिति" जीवनसंज्ञं पञ्चमूलम् । बृहती कण्टकारिका शालिपर्णी पृश्निपर्णी गोक्षुरकमिति ह्रस्वसंज्ञं पञ्चमूलम् । गोपसुता सारिवा । त्रिपादी हंसपादी कीटमारिकाख्या । 'उपजातिर्वृत्तम्' । एष विदार्यादिगणो बृंहणो वातपित्तघ्नः शोषादिहरश्च ।

सारिवोशीरकाश्मर्यमधूकशिशिरद्वयम् ।
यष्टी परूषकं हन्ति दाहपित्ताऽस्रतृड्ज्वरान् ॥ ११ ॥

सारिवोष्णवल्ली । उशीरं वीरतरुः । काश्मर्यः सर्वतोभद्रा । मधूको गुडपुष्पकः । शिशिरद्वयमेकं सितं चन्दनं मलयजसंज्ञमन्यद्रक्तचन्दनसंज्ञम् । यष्टी क्लीतकसंज्ञा । परूषकं मृदुफलम् । सारिवादिरयं दाहादीन् हन्ति ।

पद्मकपुण्ड्रौ वृद्धितुगर्द्ध्यः शृङ्ग्यमृता दश जीवनसंज्ञाः ।
स्तन्यकरा घ्नन्तीरणपित्तं प्रीणनजीवनबृंहणवृष्याः ॥ १२ ॥

पद्मकं हेमपद्मम् । पुण्ड्रः प्रपौण्डरीकम् । वृद्धिः श्रावणी । तुगा तुगाक्षीरी । ऋद्धिर्महाश्रावणी । शृङ्गी कुलीरशृङ्गी । अमृता छिन्नरुहा । दश जीवनसंज्ञा जीवन्त्यादिगणोक्ताः । एते पद्मकादयः स्तन्यहेतवः । तथा वातपित्तं घ्नन्ति । तथा प्रीणनादियुक्ताः । " अष्टाभ्यौ भाद्रौ योज्यावुपचित्रा ।"

परूषकं वरा द्राक्षा कट्फलं कतकात्फलम् ।
राजाह्वं दाडिमं शाकं तृण्मूत्रामयवातजित् ॥ १३ ॥

परूषको मृदुफलो बन्धनच्छदः । वरा श्रेष्ठा । द्राक्षा मधुफला । कट्फलं रोहिणी सोमवल्कः । कतकफलं वारिप्रसादनम् । राजाह्वं कर्णिकारम् । दाडिमं शुकेष्टम् । शाकं खरच्छदं वृक्षविशेषः । परूषकादिरेष तृडामयादिजित् ।

अञ्जनं फलिनी मांसी पद्मोत्पलरसाञ्जनम् ।
सैलामधुकनागाह्वं विषान्तर्दाहपित्तनुत् ॥ १४ ॥

अञ्जनं द्विधा । एकं स्रोतोञ्जनं यामुनसंज्ञमपरं सौवीराञ्जनं नेत्रभूषणाख्यम् । फलिनी प्रियङ्गुः । मांसी कृष्णजटा । पद्मं पुष्करम् । उत्पलं शशिप्रियम् । रसाञ्जनं तार्क्ष्यशैलम् । एला बहुला प्रसिद्धा । मधुकं मधुयष्टी । नागाह्वं नागकेसरम् । एषोऽञ्जनादिर्विषादिजित् ।

पटोलकटुरोहिणी चन्दनं मधुस्रवगुडूचिपाठान्वितम् ।

**निहन्ति कफपित्तकुष्ठज्वरान् विषं वमिमरोचकं कामलाम् । १५**

पटोलं पाण्डुफलम् । कटुरोहिणी कटुकी । चन्दनं गन्धसारम् । मधुस्रवा मरुद्री सुरङ्गी । गुडूची छिन्नरुहा । पाठाऽम्बष्ठा । एतैर्द्रव्यैर्युक्तमेतत् । पटोलादिकं कफादीन् हन्ति । " मात्रासमकं नवमोल्गन्तम् ।"

**गुडूचीपद्मकारिष्टधानका रक्तचन्दनम् ।**
**पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत् ॥ १६ ॥**

गुडूची छिन्नोद्भवा । पद्मको मरुद्भवः । अरिष्टो निम्बः । धानका धान्याकम् । रक्तचन्दनं रक्तकाष्ठम् । एष गुडूच्यादिः पित्तादीन् हन्ति ।

**आरग्वधेन्द्रयवपाटलिकाकतिक्ता निम्बाऽमृतामधुरसास्रुववृक्षपाठाः ।**
**भूनिम्बसैर्यकपटोलकरञ्जयुग्मं सप्तच्छदाग्निसुषवीफलबाणघोण्टाः ॥**
**आरग्वधादिर्जयति च्छर्दिकुष्ठविषज्वरान् ।**
**कफं कण्डूं प्रमेहं च दुष्टव्रणविशोधनः ॥ १८ ॥**

आरग्वधः शम्याकः । इन्द्रयवाः कलिङ्गकाः । पाटलिर्वसन्तदूती । काकतिक्ता शार्ङ्गेष्टा । निम्बः पारिभद्रकः । अमृता गुडूची । मधुरसा मूर्वा । स्रुववृक्षो विकङ्कतः कण्टकीवृक्षः कण्टकारिकेति प्रसिद्धः । पाठाऽम्बष्ठा । भूनिम्बः कैरातः । सैर्यकः सहचरः । पटोलं कर्कशच्छदम् । करञ्जयुग्ममेकः पूतिककरञ्जश्चिरिबिल्वाख्योऽपरो नक्तमालाख्यः । सप्तच्छदोऽयुग्मच्छदः । अग्निश्चित्रकः । सुषवी कारवी पानीयवल्ली अजशृङ्गी । फलं मदनफलम् । बाणः सहचरः । घोण्टा पूगविशेषः । अयमारग्वधादिश्छर्द्यादीन्निहन्ति । 'वसन्ततिलका वृत्तम्' ।

**असनतिनिशभूर्जश्वेतवाहप्रकीर्याः**
**खदिरकदरभण्डीशिंशपामेषशृङ्ग्यः ।**
**त्रिहिमतलपलाशा जोङ्गकः शाकशालौ**
**क्रमुकधवकुलिङ्गच्छागकर्णाश्वकर्णाः ॥ १९ ॥**
**असनादिर्विजयते श्वित्रकुष्ठकफक्रिमीन् ।**
**पाण्डुरोगं प्रमेहं च मेदोदोषनिबर्हणः ॥ २० ॥**

असनः पीतशालाख्यः । तिनिशः स्यन्दनसंज्ञः । भूर्जो बहुपुटाख्यः । श्वेतवाहोऽर्जुनः । प्रकीर्यः पूतिकरञ्जः । खदिरो गायत्री । कदरः खदिराकृतिः श्वेतसारः । भण्डी शिरीषः । शिंशपा मण्डलपत्रिका । मेषशृङ्ग्यजशृङ्गी । त्रिहिमं चन्दनत्रयं मलयजरक्तचन्दनदारुहरिद्राभेदेन । तलस्तालः । पलाशः किंशुकः । जोङ्गकोऽगुरुसंज्ञः । शाकं वरदारु । शालो रसनिर्यासाख्यः । क्रमुकं पूगम् । धवः शकटाख्यः । कलिङ्गं शक्रयवाः । छागकर्णौ बस्तकर्णः । अश्वकर्णः कुशिकः । 'मालिनी वृत्तम्' । अयमसनादिः श्वित्रादीन् विजयते शमयति । 'विजयत इति 'विपराभ्यां जेरित्यात्मनेपदम्' । तथा मेदोदोषं निबर्हति परापकरोति ।

**वरणसैर्यकयुग्मशतावरी दहनमोरटबिल्वविषाणिकाः ।**
**द्विबृहतीद्विकरञ्जजयाद्वयं बहलपल्लवदर्भरुजाकराः ॥ २१ ॥**
**वरणादिः कफं मेदो मन्दाग्नित्वं नियच्छति ।**
**अधोवातं शिरःशूलं गुल्मं चान्तःसविद्रधिम् ॥ २२ ॥**

वरणो रुमालः । सैर्यकयुग्मं सहचरद्वयमेको रक्तपुष्पः कुरबकाख्योऽन्यः पीतपुष्पः कुरण्टकाख्यः । शतावरी वरी । दहनो वह्निः । मोरटो मूर्वा । बिल्वः पूतिवातः । विषाणिकाऽजश्टङ्गी । द्विबृहत्यौ कण्टकारिकामोटिकाऽख्ये । करञ्जयुग्मं प्रागुक्तम् । तर्कारी हरीतकी चेति जयाद्वयम् । बहलपल्लवः शोभाञ्जनः । दर्भाः कुशाः । रुजाकरो हितालुः । "द्रुतविलम्बितमाह नभौ भरौ" । वरणादिरयं कफादीन् हन्ति ।

**ऊषकस्तुत्थकं हिङ्गु कासीसद्वयसैन्धवम् ।**
**सशिलाजतु कृच्छ्राश्मगुल्ममेदःकफापहम् ॥ २३ ॥**

ऊषको वृष्यकः कल्लर इति प्रसिद्धः । तुत्थकं कार्पूरं किटिहापरसंज्ञम् । हिङ्गु रामठम् । कासीसद्वयमेकं पांशुधातुसंज्ञमपरं पुष्पकासीसाख्यम् । सैन्धवं माणिमन्थम् । शिलाजतु शिलाजम् । ऊषकादिरयं मूत्रकृच्छ्रादीनपहन्ति ।

**वेल्लन्तरारणिकवूकवृषाऽश्मभेदगोकण्टकेत्कटसहाचरबाणकाशाः ।**
**वृक्षादनीनलकुशद्वयगुण्ठगुन्द्रा भल्लूकमोरटकुरण्टकरम्भपार्थाः । २४**
**वर्गो वीरतराद्योऽयं हन्ति वातकृतान् गदान् ।**
**अश्मरीशर्करामूत्रकृच्छ्राऽघातरुजाहरः ॥ २५ ॥**

वेल्लन्तरो वीरतर उशीराख्यः । अरणिकोऽग्निमन्थः । वूक ईश्वरमल्लिका । वृष आटरूषकः । अश्मभेदः पाषाणभेदः । गोकण्टको गोक्षुरकः । इत्कटा सूक्ष्मपत्रिका दीर्घलोहितयष्टिका काष्ठविशेषः । सहाचरः सहचरः । बाणो नीलपुष्पसैर्यकः । काशः श्वेतचामरकः । वृक्षादनी कामवृक्षकः । नलो मृत्युपुष्पाख्यः । कुशद्वयं स्थूलसूक्ष्मभेदेन दर्भद्वयम् । गुण्ठो वन्ततृणम् । कुन्द्रगुण्ठकापरसंज्ञः । गुन्द्रा पद्एरकः । भल्लूकः श्योनाकः । मोरटः क्षीरमोरटः । कुरण्टः सितिवारकः । करम्भ उत्तमारणि । पार्था सुवर्चला । 'वसन्ततिलका वृत्तम्' । एष वीरतरादिर्वर्गो गणो वातजान् रोगान् हन्ति तथाऽश्मर्यादिहरः ।

**रोध्रशावरकरोध्रपलाशा जिङ्गिणीसरलकट्फलयुक्ताः ।**
**कुत्सिताम्बकदलीगतशोकाः सैलवालुपरिपेलवमोचाः ॥ २६ ॥**
**एष रोध्रादिको नाम मेदःकफहरो गणः ।**
**योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः ॥ २७ ॥**

रोध्रस्तिल्वकः । शाबरकरोध्रोऽद्रिभेषजापरसंज्ञः । पलाशः शठी । जिङ्गिणी जिञ्जिणी कृष्णशाल्मली । सरलं देवदारु । कट्फलं कुमुदारोहिणी । युक्ता रास्ना

गिरिकर्णिकेत्यन्ये । कुत्सिताम्बः कदम्बः । कदली रम्भा । गतशोकोऽशोकः । एलवालु ऐलेयम् । परिपेलवं कुटन्नटं गोपालदमनकाख्यम् । मोचा शल्लकी । 'स्वागता वृत्तम्' । अयं रोध्रादिको गणो मेदःकफापहो योनिदोषघ्नश्च । तथा स्तम्भी दोषाणां शकृदादेश्च । तथा वर्णाय हितो विषघ्नश्च ।

**अर्कोऽलर्कौ नागदन्ती विशल्या भार्गी रास्ना वृश्चिकाली प्रकीर्या ।**
**प्रत्यक्पुष्पी पीततैलोदकीर्या श्वेतायुग्मं तापसानां च वृक्षः ॥ २८ ॥**
**अयमर्कादिको वर्गः कफमेदोविषापहः ।**
**क्रिमिकुष्ठप्रशमनो विशेषाद् व्रणशोधनः ॥ २९ ॥**

अर्कः सदापुष्पीः । अलर्को मन्दारकाख्यः श्वेतकुसुमः । नागदन्ती पर्वपुष्पिका । विशल्या लाङ्गली । भार्गी फञ्जी । रास्ना रस्या । वृश्चिकाल्युष्ट्रधूमकः । प्रकीर्या करञ्जकः । प्रत्यक्पुष्पी अपामार्गः । पीततैला काकादनी । उदकीर्या करञ्जकः । श्वेतायुग्ममेका किणिहिसंज्ञाऽन्या महाश्वेता पालिन्दीसंज्ञा । तापसानां वृक्ष इङ्गुदी । 'शालिनी वृत्तम्' । एषोऽर्कादिर्वर्गः । कफादिघ्नोऽतिशयेन व्रणशोधनः ।

**सुरसयुगफणिज्जं कालमाला विडङ्गं**
**खरबुसवृषकर्णीकट्फलं कासमर्दः ।**
**क्षवकसरसिभार्गी कामुका काकमाची**
**कुलहलविषमुष्टी भूस्तृणो भूतकेशी ॥ ३० ॥**
**सुरसादिगणः श्लेष्ममेदःक्रिमिनिषूदनः ।**
**प्रतिश्यायाऽरुचिश्वासकासघ्नो व्रणशोधनः ॥ ३१ ॥**

सुरसयुगं तुलसीद्वयं गौरकृष्णभेदेन । फणिज्जो मरीचकः । कालमाला कृष्णार्जकः कुबेरकभेदः । विडङ्गं वेल्लम् । खरबुसो मरुबकः । वृषकर्णी मूषिकपर्णी । कट्फलं सोमवल्कम् । कासमर्दः कासघ्नः । क्षवकः क्षुद्विबोधनः । सरसी तुम्बरपत्रिका । भार्गी अङ्गारवल्ली । कामुका रक्तमञ्जरी । अतिमुक्तक इत्यन्ये । काकमाची गुडफला । कुलहलो भूकदम्बकोऽलम्बुषाड्ख्यः । विषमुष्टिः कुचिला । महानिम्बक इत्येके । भूस्तृणं गुह्यबीजमतिच्छत्राख्यम् । भूतकेशी मांसीपुत्रचारा । 'मालिनी वृत्तम्' । सुरसादिरयं गणः श्लेष्मादिघ्नः प्रतिश्यायादिहरो व्रणशुद्धिकृत् ।

**मुष्ककस्नुग्वराद्वीपिपलाशधवशिंशपाः ।**
**गुल्ममेहाश्मरीपाण्डुमेदोऽर्शःकफशुक्रजित् ॥ ३२ ॥**

मुष्ककी मोक्षकः । स्नुग् गुडा उग्रकाण्डः । वरादीनां प्रोक्तानि नामानि । मुष्ककादिरेष गुल्मादिजित् ।

**वत्सकमूर्वाभार्गी कटुका मरिचं घुणप्रिया च गण्डीरम् ।**
**एला पाठाऽजाजी कट्वङ्गफलाऽजमोदसिद्धार्थवचाः ॥ ३३ ॥**



जीरकहिङ्गुविडङ्गं पशुगन्धा पञ्चकोलकं हन्ति।
चलकफमेदःपीनसगुल्मज्वरशूलदुर्नाम्नः ॥ ३४ ॥

वत्सको वनतिक्तकः। मूर्वा मधुरसा। मरिचमूषणम्। घुणप्रियाऽतिविषा। गण्डीरं स्नुही। एला वेला। पाठा प्राचीना। आजाजी जीरकः। कट्वङ्गफलमरलुकफलम्। केचित्तु कट्वङ्गं टुण्टुकं फलं राठमित्याहुः। अजमोदो दीप्यकः। सिद्धार्थो गौरसर्षपः। वचादीनामुक्तानि नामानि। पशुगन्धाऽजगन्धा मकरन्तराख्या। पञ्चकोलकं प्रागुक्तम्। वत्सकादयश्चलादीन् घ्नन्ति। 'आर्या'। "गुर्वन्ताष्टपदननभागार्यापूर्वसदृशंकलद्वितया। आर्यैरार्यागीतिर्गीता सङ्गीतगीतविधौ"।

वचाजलददेवाह्वनागराऽतिविषाऽभयाः।
हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ॥ ३५ ॥
वचाहरिद्रादिगणावामातीसारनाशनौ।
मेदःकफाढ्यपवनस्तन्यदोषनिबर्हणौ ॥ ३६ ॥

वचा गोलोमी। जलदोऽम्बुधरः। देवाह्वं किलिमम्। नागरं विश्वम्। अतिविषा भङ्गुरः। अभया हरीतकी। हरिद्राद्वयं पिण्डा एका पञ्चपचा दार्वीसंज्ञान्या। यष्ट्याह्वं क्लीतिका। कलशी पृश्निपर्णी। कुटजोद्भवा इन्द्रयवाः। एतौ वचादिहरिद्रादिगणावामातीसारघ्नौ मेदःकफादिहरौ च।

प्रियङ्गुपुष्पाञ्जनयुग्मपद्मापद्माद्रजोयौवनवल्ल्यनन्ता।
मानद्रुमो मोचरसः समङ्गा पुन्नागशीतं मदनीयहेतुः॥ ३७ ॥
अम्बष्ठा मधुकं नमस्करी नन्दीवृक्षपलाशकच्छुराः।
रोध्रं धातकिबिल्वपेशिके कट्वङ्गः कमलोद्भवं रजः ॥ ३८ ॥
गणौ प्रियङ्ग्वम्बष्ठादी पक्कातीसारनाशनौ।
सन्धानीयौ हितौ पित्ते व्रणानामपि रोपणौ॥ ३९ ॥

प्रियङ्गुः श्यामा। पुष्पाञ्जनं रीतिपुष्पम्। युग्मेत्यत्राऽनुवृत्तिकृतेन सम्बन्धेनाऽञ्जनमिति सम्बध्यते। तेनाऽञ्जनयुग्मं स्रोतोञ्जनमेकमन्यत्सौवीरमित्यर्थोऽवतिष्ठते पद्मा पद्मचारिणी। पद्मात् कमलाद्रजः केसरम्। यौवनवल्ली मञ्जिष्ठा। अनन्ता यवासकः। मानद्रुमः शाल्मली। मोचरसः शाल्मलीनिर्यासः। समङ्गा नमस्करी रक्तमूलाख्या। पुन्नागस्तुङ्गो रक्तकेसराख्यः। शीतं चन्दनम्। मदनीयहेतुर्धातुकी। 'उपजातिर्वृत्तम्'। अम्बष्ठा मयूरशिखाख्या। मधुकं मधुयष्टिका। नमस्करी समङ्गा। नन्दीवृक्षः प्ररोही। पलाशः प्रसिद्धः। कच्छुरा फणिहारी धन्वयवासकाख्यः। बिल्वपेशिका बिल्वमज्जा। कट्वङ्गः स्योनाकः। कमलोद्भवं रजः पद्मरेणुः। एतौ प्रियङ्ग्वम्बष्ठादिगणौ पक्कातीसारनाशनौ सन्धानीयौ हितौ पित्ते, व्रणरोपणौ च। "अष्टाभ्योऽथो गुरावुपचित्रा।"

मुस्तावचाऽग्नि द्विनिशाद्वितिक्ताभल्लातपाठात्रिफलाविषाख्याः।

**कुष्ठं त्रुटी हैमवती च योनिस्तन्यामयघ्ना मलपाचनाश्च ॥ ४० ॥**

मुस्ता गाङ्गेयी। तिक्ताद्वयमेका कटुकाऽन्या काकतिक्ता। विषाख्या शुक्लकन्दा। हैमवती श्वेतवचा। एते योन्यामयघ्नाः स्तन्यामयघ्ना मलपाचनाश्च। 'तौ ज्गौ गुरुश्चेद्वदतीन्द्रवज्रा।"

**न्यग्रोधपिप्पलसदाफलरोध्रयुग्मं**
**जम्बूद्वयाऽर्जुनकपीतनसोमवल्काः।**
**प्लक्षाऽम्रवञ्जुलपियालपलाशनन्दी-**
**कोलीकदम्बविरलामधुकं मधूकम् ॥ ४१ ॥**
**न्यग्रोधादिर्गणो व्रण्यः सङ्ग्राही भग्नसाधनः।**
**मेदःपित्तास्रतृड्दाहयोनिरोगनिबर्हणः ॥ ४२ ॥**

न्यग्रोधो वटवृक्षः। पिप्पलोऽश्वत्थः। सदाफल उदुम्बरः। जम्बूद्वयमेका राजजम्बूर्बृहत्फलाऽन्या ह्रस्वफला काकजम्बूः। अर्जुनः पार्थः। कपीतनः कपिचूडो वानीराख्यः। सोमवल्कः सितसारः खदिरः। प्लक्षः शृङ्गीप्लक्षकाख्यः। आम्रश्चूतः। वञ्जुलो वेतसः। पियालो द्राक्षारसप्रियः खरस्कन्धाख्यः। नन्दी जयवृक्षः। कोली बदरी। विरला तिन्दुकी। मधुकं यष्टिः। मधूकं मधूकपुष्पम्। न्यग्रोधादिरयं सङ्ग्रहणादियुक्तः। 'वसन्ततिलकम्'।

**एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामकं**
**स्पृक्काचोरकचोचपत्रतगरस्थौणेयजातीरसाः।**
**शुक्तिर्व्याघ्रनखोऽमराह्वमगुरुः श्रीवासकं कुङ्कुमं**
**चण्डागुग्गुलुदेवधूपखपुराः पुन्नागनागाह्वयम् ॥ ४३ ॥**
**एलादिको वातकफौ विषं च विनियच्छति।**
**वर्णप्रसादनः कण्डूपिटिकाकोठनाशनः ॥ ४४ ॥**

एलायुग्मं सूक्ष्मैला स्थूलैला च। तुरुष्कः कृत्रिमो निर्यासविशेषः। कुष्ठं गदः। फलिनी गन्धप्रियङ्गुः। मांसी नलदम्। जलं ह्रीवेरं। ध्यामकं दवदग्धकम्। स्पृक्का देवी। चोरको ग्रन्थिपर्णी। चोचं त्वक्। पत्रं गन्धपत्रम्। तगरं चक्रम्। स्थौणेयं तैलपीतकम्। जातीरसो बोलः। शुक्तिर्नखः। व्याघ्रनखः समुद्रजः। अमराह्वं देवदारु। अगुरुः प्रसिद्धः। श्रीवासश्चण्डा श्रीवेष्टकाख्यः। कुङ्कुमं वाह्लीकम्। चण्डा कोपना। गुग्गुलुः पुरः। देवधूपः सर्जरसः। खपुरः कुन्दुरुकः। पुन्नागो रक्तकेसरः। नागाह्वयं नागकेसरम्। एलादिरयं वातादीन् हन्ति। तथा वर्णप्रसन्नत्वकृत्, कण्ड्वादिहृच्च। "म्सौज्सौतौ गुरुकं च सूर्यतुरगैः शार्दूलविक्रीडितम्।"

**श्यामा दन्ती द्रवन्ती क्रमुककुटरणी शङ्खिनी चर्मसाह्वा**
**स्वर्णक्षीरी गवाक्षी शिखरिरजनकच्छिन्नरोहाकरञ्जाः।**



**बस्तान्त्री व्याधिघातो बहलबहुरसस्तीक्ष्णवृक्षात् फलानि**
**श्यामाद्यो हन्ति गुल्मं विषमरुचिकफौ हृद्रुजं मूत्रकृच्छ्रम् ॥ ४५ ॥**

श्यामा मालविका त्रिवृद् मसूरविदलाख्या । दन्ती मुकूलकश्चित्राख्यः । द्रवन्ती उन्दुरकर्णिका । क्रमुकः पट्टिकारोध्रः । कुटरणी शुक्ला त्रिवृत् । शंखिनी यवतिक्ता । चर्मसाह्वा सातला । ब्राह्मीत्यन्ये । स्वर्णक्षीरी पीतधत्तूरः । गवाक्षी गवादनी स्थाणुकर्णीसंज्ञा । इन्द्रवारुणीत्यन्य । शिखरी अपामार्गः । रजनकः कम्पिल्लकः । छिन्नरोहाऽमृतवल्ली । करञ्जः कैडर्यः । बस्तान्त्री वृषगन्धा । व्याधिघातः कृतमालः । बहलबहुरस इक्षुः । तीक्ष्णवृक्षात् पीलोः फलानि । श्यामादिरेष गुल्मादीन् हन्ति-"म्रौ भ्नौ याश्च त्रयः स्युः स्वरमुनितुरगैः स्रग्धरा स्याद्विरामैः' ।

**त्रयस्त्रिंशदिति प्रोक्ता वर्गास्तेषु त्वलाभतः ।**
**युञ्ज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम् ॥ ४६ ॥**

इति प्रकारे । त्रयस्त्रिंशदिति वर्गाः कथिताः । अत्र सङ्ख्योपादानमेषां प्राधान्यख्यापनार्थम् । अन्येऽप्येवं प्रकाराः सन्ति, एते तु प्रधाना इत्यर्थः । सुखग्रहणार्थं वा सङ्ख्यावचनं कृतम् । एतेषु त्रयस्त्रिंशत्सु वर्गेष्वलाभतोऽलाभे सति तद्विधं रसवीर्यपाकैस्तुल्यं द्रव्यमन्यदनुक्तमपि युञ्ज्यात् । नचैतावदत्र विधेयमित्याह । जह्यादयौगिकम् । न केवलमेषु वर्गेषु तद्द्रव्यालाभे यथालाभमन्यत्तद्विधं द्रव्यं तच्च त्यजेत् । दोषरोगातुराद्यपेक्षया पुरुषस्यास्मिन् काले वयसि वा यो गणः समस्तत्साध्यामयशमनाय (अनागतरोगं) च वारयितुं युक्तः। एकस्य द्रव्यस्याऽलाभे द्वयोर्बहूनां वा तत्प्रकारमेकमपरं द्रव्यं द्वे वा बहूनि वा द्रव्याणि संयोज्य प्रयोज्यः । एवं न समस्तद्रव्यापेक्षया कार्येति । यथा च सुश्रुतः—" समीक्ष्य दोषभेदांश्च गणान् भिन्नान् प्रयोजयेत् । पृथङ्मिश्रान् समस्तांश्च गणान् वा व्यस्तसंहतानिति ।" " त्रयस्त्रिंशदिति त्रेस्त्रयश्चेति त्रयसादेशः । यौगिकमिति योगाय प्रभवतीत्यर्थे योगाद्यच्चेति ठञ् ।"

**एते वर्गा दोषदूष्याद्यपेक्ष्य कल्ककाथस्नेहलेहादियुक्ताः ।**
**पाने नस्येऽन्वासनेऽन्तर्बहिर्वा लेपाभ्यङ्गैर्घ्नन्ति रोगान् सुकृच्छ्रान्**

एते पूर्वोक्ता वर्गा दोषदूष्यवयोबलादीनपेक्ष्य कल्कादियुक्ताः सुकृच्छ्रान् रोगानामयान् घ्नन्ति । ' युक्ता इत्यत्राऽन्तर्भावितण्यर्थो युजिः ' । ततः कल्कादिषु वैद्येन योजिता इत्यर्थोऽवतिष्ठते । आदिशब्देन फाण्टशीतकषायादिपरिग्रहः । कथमेते घ्नन्तीति प्रकारं युक्त्याऽऽह । पाने इत्यादि । पानाद्युपयोगे सति । लेपाभ्यङ्गैरिति बहुवचनेन लेपाभ्यङ्गस्नानादिभिश्चेति योज्यम् । ' मालिनी वृत्तम् ' ।

इति श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां पञ्चदशोऽध्यायः ॥ १५ ॥



# षोडशोऽध्यायः।

शोधनादिगणसङ्ग्रहाऽध्यायादनन्तरं स्नेहाध्यायारम्भः। यतः शोधनं स्नेहस्वेदावन्तरेण न सम्भवति। वक्ष्यति हि 'स्नेहस्वेदावनभ्यस्येत्यादि'। तस्मात्स्नेहस्वेदाध्याययोरारम्भो युक्त इत्याह–

**अथाऽतः स्नेहविधिमध्यायं व्याख्यास्यामः।**

स्नेहस्य सर्पिरादेर्विधिः स्नेहविधिस्तं व्याख्यास्यामः। शेषं पूर्ववद्योज्यम्।

**गुरुशीतसरस्निग्धमन्दसूक्ष्ममृदुद्रवम्।**
**औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम्॥ १॥**

गुर्वादिगुणयुक्तं यद्द्रव्यं तत् स्नेहनं भवति। विपरीतमतो यल्लघूष्णस्थिररूक्षतीक्ष्णस्थूलकठिनसान्द्रगुणोपेतं तद्विरूक्षणम्। प्रायोग्रहणं विरूक्षणे स्नेहने च योज्यम्। तथा च लध्वपि सार्षपं तैलं छागं च दुग्धं तथा विष्किरप्रतुदमृगाख्यं वर्गत्रयं स्नेहनं भवति। तथोष्णमपि मत्स्यमहिषमांसं स्नेहनं भवति। एवं रूक्षणेऽपि वेद्यम्। तथा च यवो गुरुशीतसरादिगुणयुक्तोऽपि विरूक्षणस्तथा राजमाषोऽपि स्नेहने प्रकृतेऽपि विरूक्षणोपन्यासोऽन्वयव्यतिरेकेण सुतरां स्नेहस्य तारतम्यप्रतिपादनार्थः।

**सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम्।**
**तत्राऽपि चोत्तमं सर्पिः संस्कारस्याऽनुवर्तनात्॥ २॥**

स्नेहेषु क्षीरानूपाऽमिषादिषु मध्ये सर्पिरादयश्चत्वारः स्नेहाः प्रकर्षेण वराः। आशु स्वकार्यकरणात्। तत्रापि च तेष्वपि चतुर्षु मध्ये सर्पिरुत्तमं संस्कारस्याऽनुवर्तनात्। ननु यदि संस्कारमनुरुध्यते सर्पिस्तदानीं मरिचचित्रकादिद्रव्यादिभिः संस्कृतस्य घृतस्य शैत्यादिगुणविपर्यासः प्राप्तः? न चेदं दृष्टम्, यदस्य शैत्यादयो गुणा विनश्यन्त्यौष्ण्यादयश्चोत्पद्यन्त इति। अत्रोच्यते। अनुशब्दोऽत्र सहार्थे। अनेकार्थत्वान्निपातानाम्। तेनायमर्थः। सर्पिषो गुणाः संस्कारगुणैः सह वर्तन्ते नतु तैलादीनाम्। तैलवसामज्जानो हि संस्कारवशात् स्वगुणांस्त्यजन्ति। अत्र चोदाहरणं चन्दनाद्यं तैलम्। अतो द्रव्यगुणान्तरैरनभिभूतगुणत्वात्सर्पिष इतरेषां तैलादीनां द्रव्यैरभिभूतगुणत्वादुत्तमत्वम्। अत एव च वातपित्तज्वरादिषु विकारेषु घृतसाध्येषु भेषजं तैलं नेष्टमनिष्टसम्पादनात्। तैलसाध्येषु तु विकारेषु तदुपशान्त्यर्थं तथाविधद्रव्यसंस्कृतं घृतमपीष्टम्। तद्धि न तथाऽनिष्टहेतुः। तस्मात्सर्वस्नेहेभ्यः सर्पिरेवोत्तमम्। संस्कारस्याऽनुवर्तनादिति न्यायाद् न्याय्यमेव। माधुर्यादिहेतोश्च।

**पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम्।**

यो यः पूर्वो यथापूर्वं यो य उत्तरो यथोत्तरमिति "यथासादृश्य इत्यव्ययी-

भावः" । उत्तरमपेक्ष्य पूर्वः पूर्वं चापेक्ष्योत्तरः । तेन चतुर्णां स्नेहानां यथाविहितानां सर्पिरादीनां त्रय एव स्नेहा वसामज्जसर्पिःसंज्ञका यथापूर्वत्वेन सम्बध्यन्ते नतु तैलाख्यः स्नेहस्तस्य पूर्वत्वाभावात् । न ह्यन्योऽस्मात्कश्चिदुत्तरोऽस्ति यदपेक्षयैष पूर्वत्वमात्मन आसादयेत्तस्मान्नास्ति पूर्वत्वसम्बन्धस्तैलस्य । तथा चतुर्णां स्नेहानां त्रय एव स्नेहा मज्जावसातैलाख्या यथोत्तरत्वेनाऽभिसम्बध्यन्ते न सर्पिःसंज्ञकः स्नेह उत्तरत्वाभावात् । न ह्यन्यः कश्चिदस्य पूर्वो विद्यते यदपेक्षयैवोत्तरत्वमात्मन आसादयतीत्युक्तम् । तदेवं यथापूर्वं पित्तघ्नत्वं वसामज्जसर्पिषां सामान्येनोक्तम् । विशेषेण च वसा पित्तघ्नी मज्जा पित्तघ्नतरः सर्पिः पित्तघ्नतममित्यर्थः । इतरघ्ना इति । इतरौ वातकफौ पित्तापेक्षया तौ घ्नन्ति पराकुर्वन्तीतीतरघ्नाः । यथोत्तरं त्रयः स्नेहा मज्जवसातैलाख्या वातश्लेष्मघ्नाः । तेन मज्जा वातश्लेष्मघ्नो वसा वातश्लेष्मघ्नतरा तैलं वातश्लेष्मघ्नतममिति प्रकृतम् । अन्ये त्वेवं व्याचक्षते । श्लेष्मणि स्नेहनिषेधादितरघ्ना इति सामान्योक्तावपि वातघ्ना इति गम्यते । अथवा द्रव्यान्तरसंस्कृतसर्पिराद्यपेक्षया कफस्याऽपीतरशब्देन ग्रहणमिति ।

**घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपि च ॥ ३ ॥**

घृताद्गुरुणः सकाशात्तैलं गुरु गुरुतरमित्यर्थः । वसा तु तैलाद् गुरुतरा ततोऽप्यतिशयेन मज्जा गुरुतमः ।

इदानीं यमकस्नेहस्त्रिवृतस्नेहो महास्नेह इति तत्रतत्रोच्यते न च ते ज्ञायन्त इत्याह—

**द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ।**

द्वाभ्यां स्नेहाभ्यां यमको नाम्ना स्नेहः । यथा सर्पिर्वसाभ्यां, सर्पिस्तैलाभ्यां, सर्पिर्मज्जभ्यामित्यादि । एवं त्रिभिः स्नेहैस्त्रिवृतश्चतुर्भिर्महास्नेह उच्यत इति शेषः ।

सम्प्रति स्नेह्यान्निरूपयति—

**स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ॥ ४ ॥**
**वृद्धबालाऽबलकृशा रूक्षाः क्षीणास्रेतसः ।**
**वातार्तस्यन्दतिमिरदारुणप्रतिबोधिनः ॥ ५ ॥**
**स्नेह्याः,**

स्वेद्यादयः स्नेह्याः स्नेहार्हाः । न ह्यस्नेहितः स्वेद्य इत्यर्थः । एवं योऽपि शोध्यः सोऽपि पूर्वं स्नेह्यः । स्वेदार्हाः स्वेद्याः । 'अर्हार्थे कृत्यप्रत्ययोऽत्र ण्यः' । एवं संशोध्याः शोधनार्हाः । मद्यासक्तस्त्रीसक्तव्यायामसक्ताश्च तथा येऽपि चिन्तकास्तथा वृद्धा बाला अबला अल्पबला इत्यर्थः । तथा कृशा रूक्षाः क्षीणरुधिराः क्षीणशुक्राश्च । वातार्ता वातपीडिताः । आर्तशब्दः स्यन्दादिषु प्रत्येकस्मिन् योज्यः । स्यन्दोऽभिष्यन्दस्तिमिरोऽक्षिरोगः । दारुणप्रतिबोधिनः कृच्छ्रोन्मीलिन इत्यर्थः । एते स्नेह्याः स्नेहार्हाः ।

मन्दाग्निं क्रूरकोष्ठं च नरं, सह क्षारलवणाभ्यां वर्तन्ते यानि घृतानि तैर्यथासङ्ख्यमुद्दीपिताऽनलं विजितकफवातं च शोधयेत् ।

**रूक्षवह्ननिलक्रूरकोष्ठव्यायामशीलिनाम् ॥ ५३ ॥**
**दीप्ताग्नीनां च भैषज्यमविरेच्यैव जीर्यति ।**
**तेभ्यो बस्तिं पुरा दद्यात्ततः स्निग्धं विरेचनम् ॥ ५४ ॥**
**शकृन्निर्हृत्य वा किञ्चित्तीक्ष्णाभिः फलवर्तिभिः ।**

रूक्षादीनां भैषज्यमविरेच्यैव विरेचनमकृत्वैव परिणतिमेति । तेभ्यो रूक्षादिभ्यः पूर्वं बस्तिं दद्यादनन्तरमेरण्डतैलबिन्दुघृतादिकं विरेचनं योजयेत् । अथवा फलवर्तिभिस्तीक्ष्णाभिः पुरीषं किञ्चिदल्पं निर्हृत्य निःसार्य स्निग्धं विरेचनं दद्यात् ।

किमिति बस्तिनाऽथवा तीक्ष्णाभिः फलवर्तिभिश्च किञ्चिच्छकृन्निर्हारः क्रियत इति ? आह—

**प्रवृत्तं हि मलं स्निग्धं विरेको निर्हरेत्सुखम् ॥ ५५ ॥**

यस्मान्मलं प्रवृत्तं सन्तं किञ्चित्पतितं, स्निग्धो विरेकः, सुखं मलप्रेरणेन निर्हरेत् ।

**विषाभिघातपिटिकाकुष्ठशोकविसर्पिणः ।**
**कामलापाण्डुमेहार्तान्नातिस्निग्धान् विरेचयेत् ॥ ५६ ॥**

नातिशब्दोऽत्रेषदर्थे । नातिशीतगुप्तमित्यत्र यथा । विषाद्यार्तानीषत्स्निग्धान् विरेचयेत् ।

**सर्वान् स्नेहविरेकैश्च रूक्षैस्तु स्नेहभावितान् ।**

सर्वानीषत्स्निग्धान् विषाद्यार्तादीन् स्नेहविरेकैः शोधयेत् । स्नेहभावितांश्च पुरुषान् रूक्षैर्विरेकैः शोधयेत् ।

**कर्मणां वमनादीनां पुनरप्यन्तरेऽन्तरे ॥ ५७ ॥**
**स्नेहस्वेदौ युप्रञ्जीत स्नेहमन्ते बलाय च ।**

वमनादीनां कर्मणामन्तरेऽन्तरे मध्ये मध्ये पुनरपि भूयः स्नेहस्वेदौ प्रयुञ्जीत । अन्ते च कर्मणां बलाय शरीरस्य बलाधानार्थं स्नेहं प्रयुञ्जीत । तदेषोऽर्थो बोद्धव्यः । आदौ स्नेहस्वेदौ, ततो वमनं, पुनः स्नेहस्वेदौ, ततो विरेचनं, पुनः स्नेहस्वेदौ, ततोऽनुवासनं, पुनः स्नेहस्वेदौ, ततो निरूहबस्तिरिति ।

किमित्येवं विधीयत इति ? आह—

**मलो हि देहादुत्क्लेश्य ह्रियते वाससो यथा ॥ ५८ ॥**
**स्नेहस्वेदैस्तथोत्क्लेश्य ह्रियते शोधनैर्मलः ।**

मलो हि देहादुत्क्लेश्य पतनोन्मुखीकृत्य शोधनैर्विरेचनादिभिर्ह्रियते । कथमिव ? वाससो वस्त्राद्यथा स्नेहस्वेदैः ।

स्नेहस्वेदाऽनभ्यासे दोषमाह—

**स्नेहस्वेदावनभ्यस्य कुर्यात्संशोधनं तु यः ॥ ५९ ॥**



**दारु शुष्कमिवाऽऽनामे शरीरं तस्य दीर्यते।**

यो नरः स्नेहस्वेदावनभ्यस्याऽशीलयित्वा शोधनं कुर्यात्तस्य शरीरं दीर्यते। कथमिव? आनामे=आनमने काष्ठं शुष्कं यथा दीर्यते।

साम्प्रतं संशुद्धेः फलमाह—

**बुद्धिप्रसादं बलमिन्द्रियाणां धातुस्थिरत्वं ज्वलनस्य दीप्तिम्।**
**चिराच्च पाकं वयसः करोति संशोधनं सम्यगुपास्यमानम् ॥९०॥**

यौवनादेः पाकः परिणाम इति। 'उपजातिर्वृत्तम्'।

इति श्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामष्टादशोऽध्यायः ॥ १८ ॥

# एकोनविंशोऽध्यायः।

मलहरणार्थं पूर्वाध्याय उक्तः। बस्तिनाऽपि मला निर्ह्रियन्त इति वमनविरेचनविधेरनन्तरं बस्तिविधिरुपदेशो युक्त इत्याह—

**अथाऽतो बस्तिविधिमध्यायं व्याख्यास्यामः।**

अथाऽत इति। बस्तिना दीयत इति बस्तिस्तस्य विधिः। शेषं पूर्ववद्व्याख्येयम्।

**वातोल्बणेषु दोषेषु, वाते वा बस्तिरिष्यते।**
**उपक्रमाणां सर्वेषां सोऽग्रणीः,**

वात उल्बणोऽधिको येषां दोषाणां तेषु बस्तिरिष्यते। आचार्यैरिति शेषः। तत्र वातपित्ते वातश्लेष्मण्यथवा केवले वायौ बस्तिरिष्यते। उपक्रमाणां चिकित्सानां सर्वेषां स बस्तिरग्रणीः प्रधानतमः।

**त्रिविधश्च सः ॥ १ ॥**
**निरूहोऽन्वासनो बस्तिरुत्तरः,**

स च त्रिप्रकारः। तदेव त्रैविध्यमाह—निरूहोऽन्वासनो बस्तिरुत्तर इति यदा तूत्तरेण मार्गेण मेढ्रादिना दीयत इत्युत्तरबस्तिः।

**तेन साधयेत्।**
**गुल्माऽऽनाहखुडप्लीहशुद्धातीसारशूलिनः ॥ २ ॥**
**जीर्णज्वरप्रतिश्यायशुक्राऽनिलमलग्रहान्।**
**वर्ध्माऽश्मरीरजोनाशान् दारुणांश्चाऽनिलामयान् ॥ ३ ॥**

तेनेत्यनेन निरूहः परामृश्यते। कथमितिचेद्? ब्रूमः। अनास्थाप्याश्चेत्यधीयते। तत्र के निरूह्या इत्यपि। ते सन्त्यत्राऽनिरूह्याः पुनरिमे प्रतिवक्तुं युज्यन्ते। अपि च। 'आस्थाप्या एव चान्वास्या' इति पठति, के आस्थाप्या इति न गम्येत यदीह निरूहो न परामृश्येत। तस्मात्तेनेत्यनेन निरूहस्य ग्रहणं न्याय्यम्। तेन निरूहेण गुल्मादींस्तथा जीर्णज्वरादीन् कृच्छ्रान् वातरोगांश्चोपक्रमेत् 'गुल्मा-



दीनां शूलान्तानां द्वन्द्वे-इनिः कार्यः । शुक्रादीनां ग्रहेण सम्बन्धः । शुक्रग्रहो रेतोविबन्धः । अनिलग्रहो वायोरसञ्चारः । रजोनाशः स्त्रियाः पुष्पनाशः ।

**अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ।**
**आमातिसारी वमिमान् संशुद्धो दत्तनावनः ॥ ४ ॥**
**कासश्वासप्रमेहार्शोहिध्माऽऽध्मानाल्पवर्चसः ।**
**शूनपायुः कृताहारो बद्धच्छिद्रो दकोदरी ॥ ५ ॥**
**कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ।**

अतिस्निग्धादयः सप्तममासगर्भिण्यन्ता अनास्थाप्या अनिरूह्याः । वमिमान् प्रसक्तच्छर्दिः । बद्धादेरुदरेण सम्बन्धः । 'तत इनिर्मत्वर्थीयः' । यद्वाऽतिसारिणा आस्थाप्या इत्यनेनाऽऽमातिसारिणोऽनास्थाप्यत्वे लब्धे पुनर्वचनमतिप्रमाथित्वेना-मातिसारिणः कथञ्चिदप्यनास्थाप्या इति । तत्राऽतिस्निग्धस्य दोषानुत्क्लेश्य निरूहः श्वयथुमुदरं च जनयेत् । क्षतोरस्ककृशयोः क्षोभव्यापन्नं शरीरमाशु पीडयेत् । आमातिसारिणो दोषस्य सम्यगनिबर्हणाद्देहस्य क्षामत्वादतिपीडां कुर्यात् । प्रसक्तच्छर्दिषो दोषोत्क्लेशो निरूहमूर्ध्वं नयेत् । कृतवमनविरेकयोः सुरिक्तं देहं क्षतं क्षार इव दहेत् । कृतनस्यस्य विवृतोर्ध्वस्रोतस्तया विभ्रंशं कुर्यात् । कासश्वासादीना-मुत्क्लिष्टदोषत्वान्निरूह ऊर्ध्वं व्रजेत् । अर्शःप्रभृतीनां भृशतरमाध्मानान्मृत्युर्वा स्यात् । अल्पवर्चस्कादीनां स्तम्भजाड्यादीनावहेत् । गर्भिण्याः पूर्वोक्ता एव दोषाः ।

**आस्थाप्या एव चान्वास्या विशेषादतिवह्नयः ॥ ६ ॥**
**रूक्षाः केवलवातार्ताः,**

य एवाऽऽस्थाप्यास्त एवाऽनुवास्याः । 'आङ्पूर्वात्तिष्ठतेर्णिजन्तादनुपूर्वाच्च वसते-रर्हार्थे ण्यत्' । विशेषेणाऽतिवह्न्यादयोऽनुवास्याः ।

**नाऽनुवास्यास्त एव च ।**
**येऽनास्थाप्यास्तथा पाण्डुकामलामेहपीनसाः ॥ ७ ॥**
**निरन्नप्लीहविड्भेदिगुरुकोष्ठकफोदराः ।**
**अभिष्यन्दिकृशस्थूलकृमिकोष्ठाढ्यमारुताः ॥ ८ ॥**
**पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान् ।**

त एवेति । य एवाऽनास्थाप्या अनिरूह्यास्ते चाऽपि नानुवास्याः । तथा पाण्ड्वादयो नानुवासनार्हाः । एतेषां हि दोषानुत्क्लेश्य स्नेहबस्तिरुदरं जनयेत् । निरन्नस्याऽनुवासनात् स्नेहविपत्तिः । तथा चोक्तं खरनादेन—"अभुक्तदत्तश्च तथा स्नेहबस्तिर्विपद्यत" इति । प्लीहादीनां स्तम्भजाड्यादीनावहेत् । कृमिकोष्ठस्याऽनुवा-सनात्पूर्वमनिर्हृतैः कृमिभिरतिबहुत्वादशेषनिःसरणेन हृदयमतिकर्षद्भिश्छर्दयेयुः । आढ्यमारुतस्य सम्यग्दोषानिर्हरणादामवृद्धिः । पीते विषे गरे च नाऽनुवास्या इति योज्यम् । अपच्यां च क्रमेण । 'श्लीपदीतीनिर्गलगण्डवानिति मतुप्' । अपच्या-



दयो नाऽनुवास्या इति। सङ्ग्रहे चोक्तम्—"अभुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनम्। सरदूरगसूक्ष्मत्वैः क्षिप्रमूर्ध्वं प्रपद्यते। तेन वायोर्जयो न स्याद्वातधामन्यतिष्ठता। कायाग्नेराशु नाशश्च विशेषादनिवर्तिना। स्नेहः सद्योऽशिताहाररुद्धे त्वामाशयेऽनिलम्। पक्वस्थं हन्ति पक्वस्थश्च्यवते चान्नपाकतः। निरूहश्च समीरश्च तीक्ष्णवेगावुभावपि। तावन्नमूर्च्छितौ तीक्ष्णावधोऽन्नेन सहागतौ। ऊर्ध्वं वा शकृता सार्धं संस्थितौ कोष्ठ एव वा। समलाहारविष्टब्धौ हरेतामाशु जीवितम्। भुक्त एवाऽनुवास्योऽस्मान्न निरूह्योऽत्र भुक्तवानिति"।

निरूहान्वासनयोर्यन्त्रस्य लक्षणमाह—

**तयोस्तु नेत्रं हेमादिधातुदार्वस्थिवेणुजम्॥ ९॥**
**गोपुच्छाकारमच्छिद्रं श्लक्ष्णर्जु गुलिकामुखम्।**

तयोर्निरूहान्वासनयोर्नेत्रं भवति। नीयते प्राप्यते स्नेहकल्काद्यपानमिति नेत्रम् 'नेत्रेति नेः ष्ट्रन्प्रत्ययः'। किम्भूतम् नेत्रम्? हेमादिति। आदिशब्दः प्रकारे। तेन रूप्यरीतिकायस्कांस्यत्रपुसीसादयो गृह्यन्ते। दारु शिंशपादिकाष्ठम्। अस्थि गजादेः। वेणुर्वंशः। एतेषां द्वन्द्वः। एभ्यो जातं तयोर्निरूहान्वासनयोर्नेत्रं भवति। किम्भूतम्? गोपुच्छाकारम्। गोपुच्छ इवाऽऽकारो यस्य तत्। तथाऽच्छिद्रं निर्विवरम्। तथा श्लक्ष्णं कोमलं तथाऽप्यृज्ववक्रम्। गुलिकासदृशमतीक्ष्णं मुखं यस्य तदेवम्।

अथाऽस्य प्रमाणमाह—

**ऊनेऽब्दे पञ्च पूर्णेऽस्मिन्नासप्तभ्योऽङ्गुलानि षट्॥ १०॥**
**सप्तमे सप्त तान्यष्टौ द्वादशे षोडशे नव।**
**द्वादशैव परं विंशात्,**

अपूर्णे वर्षे नेत्रस्य पञ्चाङ्गुलानि। आतुराङ्गुलप्रमाणमिति गम्यते। दैर्घ्येण चेत्येतदप्यनुक्तं गम्यते। वक्ष्यति हि—'स्वाङ्गुष्ठेन समं मूले स्थौल्येनेति'। आसप्तभ्यः सप्तवर्षाणि मर्यादीकृत्य षडङ्गुलानि प्रमाणम्। 'आङत्र मर्यादायां नाभिविधौ'। तेन षड्वर्षे वार्षे षडङ्गुलानि नेत्रम्। अन्यथा सप्तवर्षस्याऽपि षडेवेति प्राप्नोति। वक्ष्यति तु—'सप्तमे सप्तेति'। एवं च पूर्वापरं व्याहतं स्यात्। 'तस्मान्मर्यादायामाङित्यवेहि'। सप्तमे वर्षे सप्ताङ्गुलानि द्वादशे वत्सरे तान्यङ्गुलान्यष्टौ नेत्रम्। 'द्वादशानां पूरण इति तस्य पूरणे डडिति डट्। एवं षोडश इत्यत्र'। षोडशसंवत्सरे नवाङ्गुलानि नेत्रम्। विंशाद्वत्सरात् तस्मादूर्ध्वमेकविंशप्रभृतिवर्षेषु द्वादशाङ्गुलानि नेत्रम्। नातोऽप्यधिकानीत्येवशब्दार्थः। 'विंशतिशब्दात्पूरणे डटि तिविंशतोर्डितीति तिलोपाद्विंशशब्दः'।

**वीक्ष्य वर्षान्तरेषु च॥ ११॥**
**वयोबलशरीराणि प्रमाणमभिवर्धयेत्।**



वर्षान्तरेष्वन्तरालावच्छिन्नेषु वर्षेषु नवमदशमादिषु वीक्ष्य पर्यालोच्य नेत्रस्य प्रमाणमभिवर्धयेत्। चशब्दो भिन्नक्रमः। न केवलं वर्षान्तरेषु प्रमाणमभिवर्धयेत्। यावद्वयोबलादीनि निरूप्य प्रमाणं चाऽभिवर्धयेत्।

**स्वाङ्गुष्ठेन समं मूले स्थौल्येनाऽग्रे कनिष्ठया॥ २॥**

स्थौल्येन परिणाहेन स्वाङ्गुष्ठेन तुल्यं मूले नेत्रं तथाऽग्रं प्रान्तस्तस्मिन् कनिष्ठयाऽङ्गुल्या समं नेत्रं स्यात्। खरनादेऽप्युक्तम्। "बस्तिनेत्रमृजु श्लक्ष्णं सद्वृत्तं गुलिकामुखम्। भवेद्गोपुच्छसंस्थानं सुप्रवाहं त्रिकर्णिकम्। या त्रिभागप्रणयने मर्यादा कर्णिका भवेत्। द्वे कर्णिके चोपरिष्टाद्वस्त्याधारेऽथवान्तरे। स्वाङ्गुष्ठकपरीणाहं मूलं नेत्रस्य शस्यते। मध्यं त्वनामिकातुल्यमग्रं तुल्यकनिष्ठिकम्। स्वेनाङ्गुलिप्रमाणेन दैर्घ्यं स्याद् द्वादशाङ्गुलम्। कर्कन्धुप्रवहच्छिद्रं श्रेष्ठमन्यद्यथावयः। विंशद्वादशषड्वर्षे द्वादशाष्टषडङ्गुलम्। कर्कन्धुकसतीनाग्रमुखं छिद्रवहमित्यादि।" मुनिरप्यवोचत्--" षड्द्वादशाष्टाङ्गुलसम्मितानि षड्विंशतिद्वादशवर्षजानाम्। स्युर्महत्कर्कन्धुसतीनवाहिच्छिद्राण्यपिहितानि चैव। यथावयोऽङ्गुष्ठकनिष्ठिकाभ्यां मूलाग्रयोः स्यात् परिणाह इति।"

अधुना विन्दुद्वारेण नेत्रस्थौल्यप्रमाणमधिकं दर्शयन्नाह—

**पूर्णेऽब्देऽङ्गुलमादाय तदर्धाऽर्धप्रवर्धितम्।**
**त्र्यङ्गुलं परमं छिद्रं मूलेऽग्रे वहेत तु यत्॥ १३॥**
**मुद्गं माषं कलायं च क्लिन्नं कर्कन्धुकं क्रमात्।**

वर्षे पूर्णे सत्यङ्गुलमादाय स्वाङ्गुलात्प्रभृति क्रमेण त्र्यङ्गुलं छिद्रं मूले नेत्रस्य भवति। किम्भूतं छिद्रम्? अर्धस्याऽर्धमर्धार्धम्। तस्याऽङ्गुलस्यार्धार्धं तेन प्रवर्धितम्। तत्र प्रथमे वर्षेऽङ्गुलमात्रं छिद्रं यावद्वर्षाणि षट्। सप्तमे वर्षे सपादमङ्गुलं यावदेकादश वर्षाणि। द्वादशे वर्षे सार्धमङ्गुलं यावत्षोडशवर्षाणि। षोडशे वर्षे पादोनमङ्गुलद्वयम्। सप्तदशे वर्षेऽङ्गुलद्वयम्, अष्टादशे वर्षे सपादमङ्गुलद्वयम्। एकोनविंशतिवर्षे सार्धमङ्गुलद्वयम्। विंशतिवर्षस्य पादोनमङ्गुलित्रयम्। एकविंशतिवर्षस्य त्र्यङ्गुलं छिद्रमिति क्रमो वेद्यः। परममित्यनेनैतद्गमयति। परममुत्कर्षमाश्रित्येदं मूलच्छिद्रम्। मध्यमं तु यत्तच्छिद्रं स्वाङ्गुष्ठेनेत्यनेनोक्तम्। ऊनवर्षस्य त्वर्धाङ्गुलं छिद्रमेतदपेक्षया कल्प्यम्। अग्रे तु छिद्रं तद्भवति यन्मुद्गादि वहति। तत्र वार्षिकस्य मुद्गवाहि यावत्षड्वर्षम्। सप्तवर्षस्य माषवाहि यावदेकादशोऽब्दः। द्वादशवर्षस्य कलायवाहि, षोडशवर्षस्य क्लिन्नकलायवाहि, एकविंशतिवर्षस्य कर्कन्धुवाहीति क्रमाद्वयःप्रमाणम्। ऊनवर्षस्य च न मुद्गादिवाहि कल्प्यम्। अग्रच्छिद्रप्रमाणं चैतदग्रे कनिष्ठयेत्यत्राऽपि सङ्गच्छत एव। दैर्घ्यप्रमाणं चाऽत्र पक्षे पूर्वमेव योज्यम्। स्वाङ्गुष्ठेन समं मूले स्थौल्येनेत्यनेन च्छिद्रप्रमाणं स्वमत्या



भिषजा प्रकल्प्यम्। तथा त्र्यङ्गुलं परमं छिद्रमित्यत्र स्थौल्यप्रमाणं स्वधियैव निरूप्यम्। तन्त्रकृता तु ग्रन्थगौरवभयादुक्तप्रायत्वाच्चेह नोक्तम्।

**मूलच्छिद्रप्रमाणेन प्रान्ते घटितकर्णिकम्॥ १४॥**
**वर्त्याऽग्रे पिहितं मूले यथास्वं द्व्यङ्गुलान्तरम्।**
**कर्णिकाद्वितयं नेत्रे कुर्यात्,**

मूले यच्छिद्रमुक्तं तत्प्रमाणेन प्रान्ते घटिता सम्पादिता कर्णिका छत्राकारा गुदाधिकान्तःप्रवेशरोधिनी यस्मिंस्तदेवम्। तथा वर्त्या दशादिकृतया प्रान्ते पिहितं स्थगितम्। मूले यथास्वमूनवर्षादिकस्य तदङ्गुलप्रमाणेन द्व्यङ्गुलान्तरं कर्णिकायुगलं मूलप्रदेशे नेत्रे विदधीत बस्तिपुटयोजनार्थम्।

अथ एवाह—

**तत्र च योजयेत्॥ १५॥**
**अजाऽऽविमहिषादीनां बस्तिं सुमृदितं दृढम्।**
**कषायरक्तं निश्छिद्रग्रन्थिगन्धासिरं तनुम्॥ १६॥**
**ग्रन्थितं साधु सूत्रेण सुखसंस्थाप्यभेषजम्।**

तत्रेत्यादि। तस्मिंश्च कर्णिकाद्वितयेऽजादीनां बस्तिं योजयेत्। आदिशब्देन गोहरिणवराहमहिषाणां ग्रहणम्। अजादीनामित्येवं निर्देशेऽप्याविमहिषग्रहणे लब्धे साक्षादेतयोर्ग्रहणमन्यजेभ्यो बस्तिभ्य एतद्बस्तेर्योग्यतरत्वप्रतिपादनार्थम्। किम्भूतं बस्तिम्? सुमृदितं सस्नेहं मुहुः सुष्ठु मर्दितं तथा दृढं तथा कषायेण हरीतक्यादिना रक्तं तथा छिद्रं च ग्रन्थिश्च गन्धश्च सिराश्च ता निर्गता न सन्ति यस्य तन्निश्छिद्रग्रन्थिगन्धसिरम्। तथा तनु न स्थूलं तथा साधु सम्यक् सूत्रेण ग्रन्थितं बद्धं तथा सुखेनाऽकृच्छ्रेण संस्थापनीयमौषधं यत्र तदेवम्।

**बस्त्यभावेऽङ्कपादं वा न्यसेद्वासोऽथवा घनम्॥ १७॥**

बस्तेरभावे सत्यङ्कपादं छागेणाद्यवयवविशेषं वा न्यसेन्नेत्रे योजयेत्। अथवा वस्त्रं घनं न्यसेत्।

**निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरात्परम्।**
**प्रकुञ्चवृद्धिः प्रत्यब्दं यावत्षट्प्रसृतास्ततः॥ १८॥**
**प्रसृतं वर्धयेदूर्ध्वं द्वादशाऽष्टादशस्य च।**
**आसप्ततेरिदं मानं दशैव प्रसृताः परम्॥ १९॥**

निरूहस्य मात्रा प्रथमे वर्षे कषायस्नेहसहितस्य प्रकुञ्चः पलप्रमाणम्। षण्मासादौ त्वेततदनुसारेणार्धपलादि कल्प्यम्। वर्षात्परं प्रकुञ्चवृद्धिः प्रतिसंवत्सरं कार्या, यावत्षट् प्रसृता द्वादश पलानि। तत ऊर्ध्वं प्रसृतं वर्धयेत्। प्रत्यब्दमित्यनुवर्तते। ततो द्वादशवर्षस्यैव द्वादश पलानि। अनन्तरं त्रयोदश-

वर्षादिषु प्रतिवर्षं पलद्वयं निरूहमात्रायां वर्धयितव्यं क्रमेणैव यावत्सप्तदश-वर्षाणि। अष्टादशवर्षस्य तु द्वादश प्रसृताश्चतुर्विंशतिपलानि। इदं मानं प्रमाणं सप्ततिवर्षाणि यावत्। परं सप्ततेरूर्ध्वं दशैव प्रसृता मानं नाऽधिकम्।

एवं सांवत्सरिकादारभ्य यावद्वर्षशतिकस्तावन्निरूहमात्रामभिधायाऽनुवासनमात्रा-मधिकृत्याह—

**यथायथं निरूहस्य पादो मात्राऽनुवासने।**

यथायथं यथास्वं वार्षिकस्यैकविंशतिवत्सरादेर्वा निरूहस्य पादश्चतुर्भागो मात्रा-ऽनुवासनेऽनुवासनविषये मात्रा यस्य पलं निरूहस्तस्य कर्षप्रमाणमनुवासनमित्यर्थः। एवं सर्वत्र कल्प्यम्।

**आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्धबलं पुनः॥ २०॥**
**अन्वासनार्हं विज्ञाय पूर्वमेवाऽनुवासयेत्।**
**शीते वसन्ते च दिवा रात्रौ केचित्ततोऽन्यदा॥ २१॥**
**अभ्यक्तस्नातमुचितात्पादहीनं हितं लघु।**
**अस्निग्धरूक्षमशितं सानुपानं द्रवादि च॥ २२॥**
**कृतचङ्क्रमणं मुक्तविण्मूत्रं शयने सुखे।**
**नात्युच्छ्रिते न चोच्छीर्षे संविष्टं वामपार्श्वतः॥ २३॥**
**सङ्कोच्य दक्षिणं सक्थि प्रसार्य च ततोऽपरम्।**

आस्थाप्यं निरूहणार्थं स्निग्धं तथा स्विन्नं तथा शुद्धमूर्ध्वाधस्तथा भूयोऽपि लब्धबलं तथाऽनुवासनयोग्यं विदित्वा पूर्वमेव निरूहादनुवासयेत्। शीते हेमन्त-शिशिरयोर्ऋत्वोस्तथा वसन्ते दिवाऽनुवासयेत्। केचिदाचार्या अन्यदा शीताद्व-सन्ताच्चाऽन्यस्मिन् ग्रीष्मप्रावृट्शरदाख्ये ऋतौ रात्रावनुवासयेत्। केचिदिति भिन्न-क्रमस्ततोऽन्यदेत्यतोऽनन्तरं द्रष्टव्यः। इति केचिदाहुरिति वाक्यशेषः। धान्वन्तरास्तु सर्वथैव रात्रावनुवासनं नेच्छन्ति। धन्वन्तरिमतमधिकृत्य सङ्ग्रहेऽधिजगे—"न रात्रौ प्रणयेद्वस्तिं दोषोत्क्लेशो हि रात्रिजः। स्नेहो वीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरमिति"। तदेवं तद्देशान्तरादिवशात् प्रमाणयितव्यम्। किम्भूतं नरम्? अभ्यक्तस्नातं पूर्वमभ्यक्तः पश्चात्स्नातः। 'पूर्वकालेति समासः'। उचिताद्यदन्नेन भोजनमभ्यस्तं तस्माच्चतुर्थभागहीनमशितं तथा हितं लघुगुणकं तथा किञ्चिद-स्निग्धरूक्षं तथा सानुपानं द्रवादि च। आदिशब्देन द्रवोष्णमनभिष्यन्दीत्यादि विशिष्टं भुक्तवन्तमिति गमयति। उक्तं च सङ्ग्रहे—"अतिस्निग्धाशिनो ह्युभय-मार्गात् स्नेहो मदमूर्च्छाऽग्निसादहृल्लासादीन् जनयति। रूक्षाशिनो विष्टम्भं बलव-र्णहानिं च। अल्पमात्रद्रवाशिनोऽविसृष्टविण्मूत्रस्य चान्नावृतेन तदावरणाद्व्यापद-मिति"। किम्भूतम्? कृतचङ्क्रमणं तथा त्यक्तमूत्रपुरीषं तथा शयने सुखावहे सं-

विष्टं स्थितम् । किम्भूते ? नात्युच्छ्रिते नाऽत्युन्नते न चोच्छ्रीर्षे त्यक्तोच्छीर्षे । कथं संविष्टम् ? वामपार्श्वतो वामपार्श्वेन । सङ्कोच्य दक्षिणं सक्थि वामसक्थ्न उपरीति वृद्धवैद्याः । ततो दक्षिणसक्थ्नोऽपरं वामं सक्थि प्रसार्य । सङ्ग्रहे चोक्तम्—"शयने नात्युच्छ्रिते स्वास्तृत ईषदुन्नतपाददेशे वामपार्श्वेन प्राक्शिरसं संवेशयेदिति" ।

**अथाऽस्य नेत्रं प्रणयेत्स्निग्धं स्निग्धमुखं गुदे ॥ २४ ॥**
**उच्छ्वास्य बस्तेर्वदने बद्धे हस्तमकम्पयन् ।**
**पृष्ठवंशं प्रति ततो नाऽतिद्रुतविलम्बितम् ॥ २५ ॥**
**नाऽतिवेगं न वा मन्दं सकृदेव प्रपीडयेत् ।**

अस्यैवंभूतावस्थस्यातुरस्य गुदे स्निग्धे कृते बस्तेर्वदन उच्छ्वासवातं निःसार्य बद्धे सति नाऽतिशीघ्रं नाऽतिविलम्बितं नाऽतिवेगं नवा मन्दं तथा पृष्ठवंशाभिमुखमेकवारमेव नेत्रं स्निग्धप्रान्तं प्रपीडयेत् । कथं प्रपीडयेत् ? हस्तमकम्पयन् । अतिद्रुतादिपीड़नदोषा बस्तिव्यापदि वक्ष्यमाणाः ।

**सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ॥**

सावशेषं च स्नेहं कुर्वीत । कुतो हेतुरित्याह । यस्मात् शेषे स्नेहे वायुस्तिष्ठति ।

**दत्ते तूत्तानदेहस्य पाणिना ताडयेत्स्फिजौ ।**
**तत्पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेत् ॥ २७ ॥**

दत्ते च स्नेहे सत्युत्तानगात्रस्य तु तस्य स्फिजौ हस्तेनाऽऽहन्यात् । तथा तेनैव प्रकारेण तत्पार्ष्णिभ्यां स्फिजौ ताड़येत् । शय्यां खट्वां पादतश्चरणदेशात्त्रीन्वारानुत्क्षिपेन्न तु मूर्धतः ।

**ततः प्रसारिताङ्गस्य सोपधानस्य पार्ष्णिके ।**
**आहन्यान्मुष्टिनाङ्गं च स्नेहेनाभ्यज्य मर्दयेत् ॥ २८ ॥**
**वेदनार्तमिति स्नेहो नहि शीघ्रं निवर्तते ।**
**योज्यः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन्नकार्यकृत् ॥ २९ ॥**

ततः शय्योत्क्षेपादनन्तरं प्रसारितशरीरस्य दत्तगेन्दुकस्य पार्ष्णिके पाष्ण्यौ मुष्ट्या हन्यात् । अङ्गं शरीरं च स्नेहेन तैलादिनाभ्यज्य मर्दयेत् । किमेवं क्रियत इत्याह । अङ्गं वेदनार्तं पीडातुरमिति हेतोर्यस्मादाशु स्नेहो न निवर्तते । शीघ्रमपयाते च स्नेहे सत्यपरः स्नेहो देयः । कस्मादेवं विधीयत इत्याह । स्नेहश्च शरीराभ्यन्तरेऽतिष्ठन्नैव कार्यकृन्न स्नेहने समर्थ इत्यर्थः ।

**दीप्ताग्निं त्वागतस्नेहं सायाह्ने भोजयेल्लघु ।**

दीप्ताग्निं तु पुरुषं निवृत्तस्नेहं सन्तं लघु मात्रया स्वभावतश्चाशयेत् ।

**निवृत्तिकालः परमस्त्रयो यामास्ततः परम् ॥ ३० ॥**
**अहोरात्रमुपेक्षेत परतः फलवर्तिभिः ।**



तीक्ष्णैर्वा बस्तिभिः कुर्याद्यत्नं स्नेहनिवृत्तये ॥ ३१ ॥

स्नेहस्य त्रयः प्रहराः परो निवृत्तिकालः । ततः प्रहरत्रयात् परतो रात्रिन्दिवमुपेक्षेत । न तदाकृष्ट्यै यत्नं कुर्यात् । परतोऽहोरात्रात्फलवर्तिभिरर्शश्चिकित्सितोक्ताभिरथवा तीक्ष्णैर्वस्तिकल्पोक्तैर्बस्तिभिः स्नेहाऽऽगमनार्थं यतेत ।

अतिरौक्ष्यादनागच्छन्न चेज्जाड्यादिदोषकृत् ।
उपेक्षेतैव हि ततोऽध्युषितश्च निशां पिबेत् ॥ ३२ ॥
प्रातर्नागरधान्याम्भः कोष्णं केवलमेव वा ।

अतिरौक्ष्यादनागच्छन् स्नेहो यदि जाड्याग्निसादादिदोषान्न विधत्ते तदोपेक्षेतैव न निष्कासने यतेतेत्यर्थः । ततो निशां रात्रिमध्युषितः पुमान् प्रातः प्रभाते शुण्ठीधान्याम्बु कदुष्णं पिबेत् । केवलमेव वा नागरधान्याकरहितं कोष्णं जलं पिबेत् ।

अन्वासयेत्तृतीयेऽह्नि पञ्चमे वा पुनश्च तम् ॥ ३३ ॥
यथा वा स्नेहपक्तिः स्यादतोऽत्युल्बणमारुतान् ।
व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम् ॥ ३४ ॥

तमातुरं भूयस्तृतीये दिवसे पञ्चमे वाऽनुवासयेत् । अथवा यथा स्नेहपाको भवेदित्यग्न्यपेक्षया सप्तरात्रेऽधिके न्यूने वा त्रिरात्रे वा यथायोग्यमनुवासयेत् । अतोऽस्मादेव हेतोरधिकपवनान्व्यायामशीलानत्यग्निदीप्तान् रूक्षांश्च पुरुषान् प्रत्यहमनुवासयेत् ।

इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये ।
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥ ३५ ॥

इति पूर्वोक्तेन प्रकारेण स्नेहैस्त्रिचतुरैर्वा स्निग्धे सति, स्रोतोविशोधनार्थं निरूहं शोधनं प्रयोजयेत् । अस्निग्धे सति, तनोः शरीरस्य स्नेहनं प्रयोजयेत् । त्रयो वा चत्वारो वा त्रिचतुराः । 'सङ्ख्ययाव्ययेति समासः । चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसङ्ख्यानमित्यच् समासान्तः' ।

पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे ।
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले ॥ ३६ ॥
अभ्यक्तस्वेदितोत्सृष्टमलं नाऽतिबुभुक्षितम् ।
अवेक्ष्य पुरुषं दोषभेषजादीनि चादरात् ॥ ३७ ॥
बस्तिं प्रकल्पयेद्वैद्यस्तद्विद्यैर्बहुभिः सह ।

अथाऽनुवासनादनन्तरं तृतीये पञ्चमे वा वासरे, मध्याह्ने किञ्चिदावृत्तेऽतिक्रान्ते तथा बलिमङ्गले विहिते सति, पुरुषं कृताभ्यक्तस्वेदितं त्यक्तमलं किञ्चिद्बुभुक्षितं तथा प्रकृत्यादिभिर्ज्ञात्वा दोषादीन् विदित्वा । आदिशब्देन सात्म्यबलादिपरिग्रहः । इत्येवं सर्वमधिगत्य वैद्यो बस्तिं प्रकल्पयेत् । ननु दूष्यं देशमित्यादिना सर्वमुक्तमेवैतत्तत्किमनेनेति ? ब्रूमः । निरूहमपि सापायं पश्यताचार्येणैतदुक्तम् । दूष्य-

देशादि महता यत्नेनाऽलोचनीयमिति प्रतिपादनार्थं निरूहमात्रा प्रथममित्यादि सर्वमालोच्यम् । कथं प्रकल्पयेदित्याह । तद्विद्यैर्वैद्यकशास्त्रज्ञैर्बहुभिः सह सार्धम् ।

अथ निरूहकल्पनानाह—

**क्वाथयेद्विंशतिपलं द्रव्यस्याऽष्टौ फलानि च ॥ ३८ ॥**

द्रव्यस्य बस्तिकल्पोक्तस्य निरूहकल्पनार्थं विंशतिपलानि तथाऽष्टौ फलानि मदनफलानि सामान्यपरिभाषया षोडशगुणं जलं दत्वा क्वाथयेत् । चतुर्भागावशेषश्च ग्राह्यः ।

**ततः क्वाथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत् ।**
**पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफाधिके ॥ ३९ ॥**

तस्मादेवंकृतात् क्वाथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत् । ' द्वादशप्रसृतो हि निरूहः ' । तत्र स्नेहं षट्पलिकं कल्पयेदित्यर्थः । पित्तेऽधिके स्वस्थे च पुरुषे षष्ठांशं स्नेहं चतुष्पलिकं प्रकल्पयेदिति प्रकृतम् । कफेऽधिके स्नेहमष्टमांशं त्रिपलिकं प्रकल्पयेत् । सर्वत्र च वातपित्तकफेष्वधिकेषु स्वस्थवृत्तश्चाष्टमं भागं त्रीणि पलानि कल्कस्य प्रयोजयेदिति प्रकृतम् । ननु स्वस्थस्य दोषचालनं प्रतिषिद्धं तन्त्रान्तरीयैः । तद्ग्रन्थो हि—" यो हि सञ्चालयेत्सुप्तं वने सिंहं करादिभिः । स दोषांश्चालयेत् स्वस्थान् प्रच्छर्दनविरेचनैरिति " । तस्मात् स्वस्थे निरूहस्य कल्पना न युक्तेति । तदेतदसत् । यस्मात् प्रागभिहितम्—" शीतोद्भवं दोषचयं वसन्ते विशोधयन् ग्रीष्मजमभ्रकाले । घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगानृतुजान्न जात्विति" । तस्मादाचार्यवचनाज्ज्ञायते स्वस्थवृत्तेरपि शुद्धिविधानं सम्मतमिति तन्त्रकृतस्तन्त्रान्तरीयं मतं त्वसदेव शिष्टव्यवहारविरुद्धत्वात् ।

**सर्वत्र चाऽष्टमं भागं कल्काद्भवति वा यथा ।**
**नाऽत्यच्छसान्द्रता बस्तेः,**

सर्वत्र वाते पित्ते कफे च कल्कात् पेष्यद्रव्यादष्टमं भागं त्रीणि पलानि कल्पयेत् । भवति वेत्यादि । यथा नाऽत्यच्छसान्द्रता बस्तेः । यथा वा बस्तिरत्यच्छोऽतिसान्द्रो वा घनो न भवति तथा कल्कः कल्कयितव्यः ।

**पलमात्रं गुडस्य च ॥ ४० ॥**
**मधुपट्वादिशेषं च युक्त्या,**

' पलमात्रं गुडस्य चेति ' पित्ते तदधिकं नेति ज्ञापनार्थं मात्रग्रहणम् । मधुपट्वादिशेषं च युक्त्या प्रकल्पयेत् । तत्रेयं युक्तिः—माक्षिकस्य पलचतुष्टयं सैन्धवस्य च कर्षः । तथा क्वचिद्यवक्षारस्य कर्षः । आदिग्रहणान्मांसरससुरासवमूत्रक्षीरकाञ्जिकानां ग्रहणम् ।

**सर्वं तदेकतः ।**
**उष्णाम्बुकुम्भीवाष्पेण तप्तं खजसमाहतम् ॥ ४१ ॥**



**प्रक्षिप्य बस्तौ प्रणयेत्पायौ नात्युष्णशीतलम्।**
**नाऽतिस्निग्धं नवा रूक्षं नाऽतितीक्ष्णं नवा मृदु ॥ ४२ ॥**
**नात्यच्छसान्द्रं नोनाऽतिमात्रं नाऽपटु नाऽति च।**
**लवणं तद्वदम्लं च,**

तदेतत्सर्वमौषधमेकत एकस्मिन् कृत्वा भेषजपाकातिक्रान्तिपरिहारार्थमुष्णाम्बु कुम्भीबाष्पेण तप्तं खजेन दर्व्या हननकाष्ठेन समाहतमालोडितं तथा 'ब्रह्मदक्षेत्यादिना' चाऽभिमन्त्रितं बस्तौ प्रक्षिप्य, पायौ गुदे, प्रणयेत्। नाऽत्युष्णं नाऽतिशीतलं, नाऽतिस्निग्धं, न वा रूक्षं, नाऽतितीक्ष्णं, न वा मृदु, नाऽत्यच्छं, नातिसान्द्रं, नाऽतिघनं, नोनमात्रं (न–ऊनमात्रं), न चाऽतिमात्रं, नाऽपटुं, नाऽतिलवणं 'तद्वदम्लं चेत्यादिना' नाऽत्यम्लम्। अतिशब्दप्रयोगादत्र मध्यमावस्थानुगमः।

साम्प्रतमन्यमतमाभिवक्ते--

**पठन्त्यन्ये तु तद्विदः ॥ ४३ ॥**
**मात्रां त्रिपलिकां कुर्यात्स्नेहमाक्षिकयोः पृथक्।**
**कर्षार्धं माणिमन्थस्य स्वस्थे कल्कपलद्वयम् ॥ ४४ ॥**
**सर्वद्रवाणां शेषाणां पलानि दश कल्पयेत्।**
**माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् ॥ ४५ ॥**
**आवपेत निरूहाणामेष संयोजने विधिः।**

पठन्तीत्यादि। तद्विदो बस्तिविद एवं पठन्ति। यथा--' मात्रां त्रिपलिकां कुर्यादित्यादि '। सम्प्रति निरूहावयवानां माक्षिकादीनां संयोजनविधिमाह। माक्षिकमित्यादि। माक्षिकादि क्रमादावपेत् कुण्डके माक्षिकं प्रथमं प्रक्षिप्य मर्दयेत्। ततस्तत्रैव लवणं क्षिप्त्वा मेलयेत्। ततो लवणं मर्दयित्वा मिश्रयेत्। एवं स्नेहं ततोऽनु कल्कं ततः क्वाथमित्यनेन क्रमेण मिश्रयेदित्यर्थः। एवं योजितानि द्रव्याणि समरसतां यान्ति। समरसभावेन निरूहस्य सम्यग्योगो भवति। निरूहाणां संयोजने मिश्रणे, एष विधिरेतद्विधानम्।

**उत्तानो दत्तमात्रे तु निरूहे तन्मना भवेत् ॥ ४६ ॥**
**कृतोपधानः सञ्जातवेगश्चोत्कटकः सृजेत्।**

निरूहे दत्तमात्रे तूतानः सन्, तन्मना निरूहवेगे दत्तावधानस्तथा कृतोपधानः सन्, तिष्ठेत्। समुद्गतवेगश्चोत्कटकः सन्, त्यजेद्वेगमिति शेषः।

**[1]आगतौ परमः कालो मुहूर्तो मृत्यवेऽपरः ॥ ४७ ॥**
**तत्राऽऽनुलोमिकं स्नेहक्षारमूत्राऽम्लकल्पितम्।**

---

मौ० टि०–१ आगतौ=दत्तनिरूहप्रतिनिवर्त्तने, मुहूर्त्तः कालः=घटिकाद्वयात्मकः समयः, परमः=पर्य्याप्त इत्यर्थः। अपरः=मुहूर्त्तादग्रे प्रवर्त्तमानः कालः, प्रतीक्षितः सन्, मृत्यवे स्यादितिभावः।



**त्वरितं स्निग्धतीक्ष्णोष्णं बस्तिमन्यं प्रपीडयेत् ॥ ४८ ॥**
**विदध्यात्फलवर्तिं वा स्वेदनोत्त्रासनादि च ।**

आगतौ प्रत्यागमने कालः परमो मुहूर्तः। अपरस्तस्मान्मुहूर्तादन्यौ विट्श्रद्धागमनकालो (?) मृत्यवे मरणाय। तत्र तस्मान्मुहूर्तात्परमनागतनिरूहस्य त्वरितमपरं बस्तिं निरूहं प्रपीडयेदिति सम्बन्धः। किम्भूतं निरूहम्? आनुलोमिकमनुलोमकरम्। स्नेहस्तथा क्षारो यवक्षारादिस्तथा मूत्रं गोमूत्रमम्लं तक्रकाञ्जिकादि तैः कल्पितं निरूहितम्। तथा स्निग्धं च तीक्ष्णमुष्णं च स्नेहयोगादेव स्निग्धत्वे सिद्धे स्निग्धग्रहणं निरूहाणामस्निग्धतरत्वप्रतिपादनार्थम्। 'आनुलोमिकमित्यध्यात्मादित्वाट्ठञ्'। अथवा फलवर्तिं विदध्यात्। फलेन मदनफलेन युक्ता वर्तिः सा चार्शश्चिकित्सिते वक्ष्यमाणा। स्वेदनोत्त्रासनादि च। स्वेदनं स्वेदः। उत्त्रासनं खड्गहस्तयोधदर्शनादिना। कुपितनृपखड्गव्यग्रोग्रबाहुदर्शनादिनाऽऽकुलं कुर्यात्।

**स्वयमेव निवृत्ते तु द्वितीयो बस्तिरिष्यते ॥ ४९ ॥**
**तृतीयोऽपि चतुर्थोऽपि यावद्वा सुनिरूढता ।**

फलवर्त्याद्यायासं विनाऽपि निवृत्ते निरूहे सति द्वितीयो निरूह इष्यते। यत्नविशेषेण तु निरूहे निवृत्ते सति नाऽन्यं बस्तिं प्रपीडयेदित्युक्तं भवति। तृतीयोऽपीत्यपिः समुच्चये। एवं चतुर्थोऽपीति। यावद्वेति। पञ्चमादयोऽपि बस्तयो देया यावत्सम्यङ्निरूढत्वं स्यात्।

कानि पुनः सम्यङ्निरूढलिङ्गानीत्याह—

**विरिक्तवच्च योगादीन्विद्यात्,**

निरूहे विरिक्त इव योगादीन् विद्यात्। तत्र चोक्तम्—'हृत्कुक्षिशुद्धिरित्यारभ्य यात्रद्भवन्त्यतिविरिक्तस्य तथाऽतिवमनामया इति'।

**योगे तु भोजयेत् ॥ ५० ॥**
**कोष्णेन वारिणा स्नातं तनु धन्वरसौदनम् ।**

योगे तु निरूहस्य सम्यग्योगे सति सुखोष्णजलस्नातं सन्तं भोजयेत्। किम्? धन्वरसो जाङ्गलरसश्चौदनश्च तद्धन्वरसौदनम्। किम्भूतं धन्वरसौदनम्? तनु अघनम्। ननु यूषक्षीररसैः क्रमादिति वक्ष्यति तत्कथमिहेदमभ्युपपद्यते? ब्रूमः। वातविकारशमनार्थो हि निरूहः प्रायेणोष्यते। तस्मिंश्च रसकौदनमेव पथ्यं श्रेयः। अग्रे च दोषाऽपेक्षया पथ्यं विशेषेणैवोपदेक्ष्यतेऽतो नाऽत्र किञ्चिदनुपपन्नम्। ननु दोषनिर्हरणं वमनविरेकाभ्यां द्रवादेव क्रियते। तत्र पेयादिक्रमो युक्तस्तथेहाऽपि युक्तः स्यात्? नैवम्। विरेकवमनाभ्यां हि वह्निस्थानमाच्छाद्यते तेनाऽग्निमान्द्यं भवति। निरूहस्तु नाभेरूर्ध्वमगच्छन्नेव दोषनिर्हरणं करोति। तेन नाऽत्राग्निमान्द्यापत्तिः। तस्मान्नाऽत्र पेयादिक्रमः। अपि च वातविकारविषयत्वाच्च रसौदनप्रायमेव पथ्यं युक्तम्।



**विकारा ये निरूहस्य भवन्ति प्रचलैर्मलैः ॥ ५१ ॥**
**ते सुखोष्णाम्बुसिक्तस्य यान्ति भुक्तवतः शमम्।**

प्रकर्षेण चलैर्दोषैर्ये विकारा भवन्ति ते कोष्णसलिलस्नातस्य कृतभोजनस्य सतः शमं गच्छन्ति। अत एव तत्कार्यमिति भावः।

**अथ वातार्दितं भूयः सद्य एवाऽनुवासयेत् ॥ ५२ ॥**

अथ निरूहादनन्तरं वातपीडितं पुरुषं सद्य एव तस्मिन्नेव दिनेऽनुवासयेत्।

**सम्यग्घीनाऽतियोगाश्च तस्य स्युः स्नेहपीतवत्।**

तस्याऽनुवासनस्य स्नेहपानस्येव सम्यग्योगादयः स्युः। स्नेहपीतस्येव स्नेहपीतवत्। 'षष्ठ्यन्ताद्वतिः'।

तत्र वातानुलोम्यमित्यादि घ्राणवक्त्रगुदस्रवा इत्युक्तं स्नेहपानसम्यग्योगातियोगलक्षणम्। अन्यदनुवासनस्य सम्यग्योगलक्षणमाह—

**किञ्चित्कालं स्थितो यश्च सपुरीषो निवर्तते ॥ ५३ ॥**
**साऽनुलोमाऽनिलः स्नेहस्तत्सिद्धमनुवासनम्।**

चशब्दः पूर्वोक्तं सम्यग्योगलक्षणं समुच्चिनोति। किञ्चिदल्पमात्रं कालं कोष्ठाभ्यन्तरे स्थितः सन् सविट्कः साऽनुगुणपवनो निवर्तते निःसरति यः स एवम्भूतः स्नेहस्तत्सिद्धमभिमतकार्यनुवासनम्। उक्तं च व्यस्तं समस्तं चेदं सिद्धानुवासनलक्षणम्।

**एकं त्रीन् वा बलासे तु स्नेहबस्तीन् प्रकल्पयेत् ॥ ५४ ॥**
**पञ्च वा सप्त वा पित्ते नवैकादश वाऽनिले।**
**पुनस्ततोऽप्ययुग्मांस्तु पुनरास्थापनं ततः ॥ ५५ ॥**

स्नेहबस्तीननुवासनानि एकं त्रीन्वा श्लेष्मविकारे प्रकल्पयेत्। कार्ये कारणोपचारादेवमुक्तम्। एवमग्रेऽपि चिन्त्यम्। पित्ते पञ्च स्नेहबस्तीनथवा सप्त दद्यात्। नव एकादश वा वायौ दद्यात्। ततः पुनरयुग्मान् स्नेहबस्तीन् दद्यात्। ततः पुनरप्यास्थापनं दद्यात्। अयुग्मवचनं स्नेहबाहुल्येनाऽयं व्यवहारो युक्त इति प्रतिपादयितुम्। वातार्तस्य तु युग्मा अपि देया एव। तथा चाऽमुनैवाऽभ्यधायि—'व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरमिति'।

**कफपित्ताऽनिलेष्वन्नं यूषक्षीररसैः क्रमात्।**

कृतास्थापनस्य च पथ्यं श्लेष्मपित्तपवनेषु यथासङ्ख्यं यूषादिभिः सहान्नमुपभोक्तव्यम्।

**वातघ्नौषधनिःक्वाथस्त्रिवृतासैन्धवैर्युतः ॥ ५६ ॥**
**बस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णरसान्वितः।**

बस्तिर्निरूहोऽनिले वातविषये वातघ्नौषधानि दशमूलादीनि, तेषां निःक्वाथो यवकादिसिद्धः, त्रिवृतासैन्धवैर्युतस्तथा स्निग्धो मधुराम्लोष्णरसयुक्तः पवने हितः।

**न्यग्रोधादिगणक्वाथौ पत्रकादिसितायुतौ ॥ ५७ ॥**
**पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ।**
पित्ते मधुरशिशिरौ सघृतदुग्धेक्षुरसमधू द्वौ बस्ती हितौ।
**आरग्वधादिनिःक्वाथवत्सकादियुतास्त्रयः ॥ ५८ ॥**
**रूक्षाः सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे।**
तथाऽऽरग्वधेन्द्रयवेत्यादिकषायवत्सकमूर्वेत्यादिकषायाभ्यां युक्ता रूक्षा माक्षिकगोमूत्राभ्यां सहितास्तीक्ष्णादिगुणयुक्तास्त्रयो बस्तयः कफे हिताः।
**त्रयश्च सान्निपातेऽपि दोषान्घ्नन्ति यतः क्रमात् ॥ ५९ ॥**
सन्निपाते त्रय एव बस्तयो हिताः। यस्मादेते त्रीन् दोषान् क्रमेण पराकुर्वन्ति।
**त्रिभ्यः परं बस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः।**
**नहि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥ ६० ॥**
अत एव हेतोस्त्रिभ्यो बस्तिभ्य: परमपरे भिषजो निरूहं नेच्छन्ति। यतस्त्रयो दोषास्त्रिभिर्बस्तिभिर्निर्वर्तिता इति चतुर्थो दोषो न विद्यते यं लक्षीकृत्य भूयश्चतुर्थः पुटको दीयेत।
**उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात्।**
**त्रिधैवं कल्पयेद्बस्तिमित्यन्येऽपि प्रचक्षते ॥ ६१ ॥**
अन्ये वैद्यास्तृतीयो बस्तिर्दोषाणां उत्क्लेशनं शुद्धिकरं शमनं क्रमादित्यनया युक्त्या बस्तित्रयं कल्पयेदिति जगदुः।
तत्र किं क्रियतामित्याह—
**दोषौषधादिबलतः सर्वमेतत्प्रमाणयेत्।**
तदत्र दोषभेषजसात्म्यादिवशात्सर्वमप्येतत्प्रमाणीकार्यम्।
अथ पूर्वमतानुग्राहि स्वमतमाह—
**सम्यङ्निरूढलिङ्गं तु नाऽसम्भाव्य निवर्तयेत् ॥ ६२ ॥**
सम्यङ्निरूढलिङ्गं त्वसम्भाव्याऽसम्पाद्य न निवर्तयेत्। बस्तिदानं कारयेदेवेति।
इदानीं कर्मकालयोगाख्यान् बस्तिविशेषानाह—
**प्राक्स्नेह एकः पञ्चान्ते द्वादशाऽऽस्थापनानि च।**
**सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः ॥ ६३ ॥**
प्राक् पूर्वमेकः स्नेहबस्तिः। अन्तेऽवसाने पञ्च स्नेहाः। तथा निरूहा द्वादश सहानुवासनाः। एवं त्रिंशद्बस्तयः कर्मेति गदिताः।
**कालः पञ्चदशैकोऽत्र प्राक् स्नेहोऽन्ते त्रयस्तथा।**
**षट् पञ्चबस्त्यन्तरिताः,**
पञ्चदश बस्तयः काल उच्यते। कथमुच्यते? एकः पूर्वं स्नेहस्तथाऽन्ते त्रयः स्नेहास्तथा षट् स्नेहाः पञ्चभिर्बस्तिभिरन्तरिता इति।

योगोऽष्टौ बस्तयोऽत्र तु ॥ ६४ ॥
त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ ।

योगोऽत्राष्टौ बस्तयः । कथमित्याह । त्रयो निरूहास्त्रीणि चाऽनुवासनानि तथाऽद्यन्तयोर्द्वौ स्नेहबस्ती इति ।

स्नेहबस्तिं निरूहं वा नैकमेवाऽतिशीलयेत् ॥ ६५ ॥
उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयम् ।

स्नेहबस्तिमथवा निरूहमेकमेव केवलमतिशयेन न शीलयेत् । यतः स्नेहादतिसेवितादुत्क्लेशाऽग्निमान्द्ये जायेते । निरूहादतिसेवितात्पवनाद्भयं जायते ।

तस्मान्निरुढः स्नेह्यः स्यान्निरूह्यश्चाऽनुवासितः ॥ ६६ ॥

तस्मात्कारणान्निरूढो नरः स्नेहनार्हः स्यात् । अनुवासितश्च पुरुषो निरूहणार्हो भवेत् ।

स्नेहशोधनयुक्त्यैवं बस्तिकर्म त्रिदोषजित् ।

एवं पूर्वोक्तया स्नेहशोधनयुक्त्या बस्तिकर्म सेवितं त्रीन् दोषान् जयति ।

अधुना मात्राबस्तिं लक्षयति—

ह्रस्वया स्नेहपानस्य मात्रया योजितः समः ॥ ६७ ॥
मात्राबस्तिः स्मृतः स्नेहः,

ह्रस्वया यामद्वयजरणलक्षणया स्नेहमात्रया समस्तुल्यो योजितः स्नेहो मात्राबस्तिसंज्ञः स्मृतः सद्वैद्यैरिति शेषः । अन्यैश्चाऽन्यथा स्नेहमात्रोक्ता । यथा—"षट्पला तु भवेज्ज्येष्ठा त्रिपला मध्यमा भवेत् । कनीयस्यध्यर्धपला त्रिधा मात्राऽनुवासना" इति ।

शीलनीयः सदा च सः ।
बालवृद्धाध्वभारस्त्रीव्यायामासक्तचिन्तकैः ॥ ६८ ॥
वातभग्नबलाऽल्पाग्निनृपेश्वरसुखात्मभिः ।
दोषघ्नो निष्परीहारो बल्यः सृष्टमलः सुखः ॥ ६९ ॥

स च मात्राबस्तिर्बालादिभिः सततमेव शीलयितव्यः । स च शीलितो दोषापहस्तथा निष्परीहारोऽनियन्त्रणो बलाय हितो निर्गतपुरीषादिकः सुखकारी स्यात् ।

बस्तौ रोगेषु नारीणां योनिगर्भाशयेषु च ।
द्वित्रास्थापनशुद्धेभ्यो विदध्याद्बस्तिमुत्तरम् ॥ ७० ॥

बस्तिस्थाने रोगेषु नराणामित्यर्थाल्लभ्यते । नारीणां योनिगर्भाशयेषु च द्वाभ्यां त्रिभिर्वाऽऽस्थापनैः शुद्धेभ्यस्तेभ्यो नरेभ्यः स्त्रीभ्यश्चोत्तरबस्तिं दद्यात् । द्वे वा त्रीणि वा द्वित्राणि च तान्यास्थापनानि च द्वित्रास्थापनानि तैः शुद्धा द्वित्रास्थापनशुद्धाः । 'पुमान्स्त्रियेत्येकशेषः' । गुदादुत्तरेण मार्गेण दीयत इत्युत्तरबस्तिः ।





अथ नेत्रस्य परिमाणमाह—

**आतुराङ्गुलमानेन तन्नेत्रं द्वादशाङ्गुलम्।**
**वृत्तं गोपुच्छवन्मूलमध्ययोः कृतकर्णिकम्॥ ७१॥**
**सिद्धार्थकप्रवेशाग्रं श्लक्ष्णं हेमादिसम्भवम्।**
**कुन्दाश्वमारसुमनःपुष्पवृन्तोपमं दृढम्॥ ७२॥**

तन्नेत्रमुत्तरबस्तियन्त्रकमातुराङ्गुलप्रमाणेन द्वादशाङ्गुलं दैर्घ्येणेत्यर्थादेव प्रतीयते। पुरुषाणामेवैतदिति वेद्यम्। स्त्रीणां हि वक्ष्यति—"नेत्रं दशाङ्गुलं मुद्रप्रवेशमिति"। तच्च वृत्तं वर्तुलं गोपुच्छाकृति तथा मूले मध्ये चोत्पादितकर्णिकं तथा सिद्धार्थकः प्रविशत्यस्मिन्निति सिद्धार्थकप्रवेशं तादृशमग्रं प्रान्तो यस्य नेत्रस्य तत् सिद्धार्थकप्रवेशाग्रं तथा श्लक्ष्णमतिकोमलं तथा हेमादिजम्। आदिशब्देन धात्वादयः प्रागुक्ता गृह्यन्ते। कुन्दकरवीरजातीपुष्पवृन्तसदृशं दृढं च। अश्वमारः करवीरः।

**तस्य बस्तिर्मृदुलघुर्मात्रा शुक्तिर्विकल्प्य वा।**

तथा तस्य नेत्रस्य बस्तिर्मृदुर्लघुर्योज्य इति शेषः। मात्रा शुक्तिः कर्षद्वयम्। शुक्तिः स्नेहस्येति शेषः। विकल्प्य वा बलवयःसत्वदेहसात्म्यादि निरूप्य वा मात्रा कार्येत्यर्थः।

**अथ स्नाताशितस्यास्य स्नेहबस्तिविधानतः॥ ७३॥**
**ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ।**
**हृष्टे मेढ्रे स्थिते चर्जौ शनैः स्रोतोविशुद्धये॥ ७४॥**
**सूक्ष्मां शलाकां प्रणयेत्तया शुद्धेऽनुसेवनीम्।**
**आमेहनान्तं नेत्रं च निष्कम्पं गुदवत्ततः॥ ७५॥**
**पीडितेऽन्तर्गते स्नेहे स्नेहबस्तिक्रमो हितः।**

अथेति मङ्गले। अस्य रोगिणो निरूहवत्कृतमङ्गलस्य तथा पूर्वं स्नातस्य पश्चादशितस्य। कथमशितस्य? स्नेहबस्तिविधानतः। 'तृतीयार्थे तसिः'। स्नेहबस्तौ यादृश आहारो विहितस्तेन कृतभोजनस्येत्यर्थः। तथर्जोः स्पष्टं स्थितस्य तथा सुखेनाऽऽसीनस्य। क? पीठ आसने। किम्भूते? जानुतुल्ये। तथा मृदावकठिने च। प्रहृष्टे स्तब्धे तथा ऋजौ स्पष्टं कृत्वा स्थिते सति शनैर्न त्वरया सूक्ष्मां शलाकां प्रणयेत्। स्थूलायां तत्र क्षतकरणात्। तया शलाकया शुद्धे मेढ्रे सत्यनुसेवनीं सेवनीमनुलक्षीकृत्य आमेढ्रान्तं नेत्रं प्रणयेत्। षडङ्गुलं प्रायेण प्रवेशयेदित्यर्थः। कथम्? गुद इव निष्कम्पम्। ततो निष्कम्पं स्थापनादनन्तरं पीडिते पुटके स्नेहे चाऽन्तःप्रविष्टे सत्यनुवासनक्रमो हितः। पाणिना ताडयेत् स्फिजौ तस्य पार्ष्णिभ्यामित्यादिकः।

**बस्तीननेन विधिना दद्यात् त्रींश्चतुरोऽपि वा॥ ७६॥**



**अनुवासनवच्छेषं सर्वमेवाऽस्य चिन्तयेत्।**

त्रींश्चतुरो वा बस्तीननेन विधानेन दद्यात्। शेषं विधिपरिहारादि सम्यग्दत्तव्यापदादिकमस्योत्तरबस्तेरनुवासनस्येव दापयेत्। यदुक्तं खरनादेन—"यथाशेषं प्रवेश्याऽथ स्नेहस्यार्धपलं नयेत्। प्रत्यागते द्वितीयं वा तृतीयं वा प्रदापयेत्। स चेदनुवसेत्तत्र स्यात्क्रियेयं विशेषतः। पिप्पल्यारग्वधाङ्गारधूमवत्सकसैन्धवैः। मूत्राऽम्लपिष्टैर्गुलिकाः सर्षपमाषसन्निभाः। छायासु शुष्कास्ताः शिश्ने दद्यात्सर्षपसन्निभाः। पूर्वं, माषोपमाः पश्चात्ताभिः स्नेहं समानयेत्। स्नेहे प्रत्यागते च स्यादानुवासनिको विधिरिति"।

एवं पुरुषाणामुत्तरबस्तिविधानमुक्त्वा स्त्रीणां वक्ति—

**स्त्रीणामार्तवकाले तु योनिर्गृह्णात्यपावृतेः॥ ७७॥**
**विदधीत तदा तस्मादनृतावपि चात्यये।**
**योनिविभ्रंशशूलेषु योनिव्यापदसृग्दरे॥ ७८॥**

ललनानामृतुकाल एवाऽर्तवकालः, 'ऋतुस्तु द्वादशनिशा' इत्यादिनोक्तस्तत्र ऋतौ योनिः कर्ता उत्तरबस्तिस्वभावं स्नेहं गृह्णाति। कुतः? अपावृतेरपावरणात् कारणात्। अन्यदा तु संवृतत्वान्न स्नेहमादत्ते गर्भवत्। तस्माद्धेतोस्तदा ऋतुकाले विदधीत। प्रकृतत्वादुत्तरबस्तिम्। आत्ययिके व्याधावनृतावपि विदधीत। तमेवात्ययं दर्शयति। योनीत्यादि। योनिविभ्रंश उत्तरे वक्ष्यमाणः। योनिशूलो योनिरुजा तेषु, तथा योनिव्यापत्तौ तथाऽसृग्दरे, 'रक्तपित्तं योनिमुखेनागच्छत् स्त्रीणामसृग्दरमुच्यते'। एतेषु रोगेषूत्तरबस्तिमात्ययिकत्वादनृतावपि दद्यात्।

अथाऽत्र नेत्रस्य प्रमाणमाह—

**नेत्रं दशाङ्गुलं मुद्गप्रवेशं चतुरङ्गुलम्।**
**अपत्यमार्गे योज्यं स्याद् द्व्यङ्गुलं मूत्रवर्त्मनि॥ ७९॥**
**मूत्रकृच्छ्रविकारेषु बालानां त्वेकमङ्गुलम्।**

दशाङ्गुलप्रमाणं दैर्घ्येण तत्, तथा मुद्गः प्रविशत्यस्मिन्निति मुद्गप्रवेशं 'तदिवाग्रं प्रवेशाग्रमिति वेद्यमन्तलोपाख्यया तन्त्रयुक्त्या'। वृत्तगोपुच्छाकारादि। शेषं पूर्वोक्तमत्र वेद्यम्। पुष्पवृन्तोपमत्वं त्वत्र न युज्यते। यतो मूत्रस्रोतःपरिणाहं यत्तद्विधातव्यं पुरुषे स्त्रियां चैवंप्रकारम्। यदुक्तं मुनिना—"पुष्पनेत्रप्रमाणं तु प्रमदानां दशाङ्गुलम्। मूत्रस्रोतःपरीणाहमिति"। तत्र चतुरङ्गुलं यावत् प्रवेश्यम्। चतुरङ्गुला चोर्ध्वकर्णिका कार्या। अधिकप्रवेशनिवारणार्थं नतु मेहननेत्र इव मध्यमकर्णिकेति। अयमर्थोऽत्र साक्षान्नोपात्तो गम्यमानत्वात्। अत एतत्प्रवेशप्रमाणमाह—'चतुरङ्गुलमपत्यमार्गे योज्यं स्यादिति'। अपत्यमार्गे इत्यनेन स्त्री गर्भग्रहणप्रसवादिसमर्था सूच्यते। एवंविधायाः स्त्रियाश्चतुरङ्गुलं प्रवेशयितव्यमिति। मूत्रवर्त्मनि द्व्यङ्गुलं योज्यम्। या स्त्री सुरतव्यवहारगर्भग्रहणायोग्या, अथवा बाला,

या अप्रौढा, तस्या योनिर्मूत्रस्यैव केवलं मार्गस्तस्या नेत्रं द्व्यङ्गुलं प्रवेश्यम्। अत ऊर्ध्वं तु प्रवेशात्तासां मांसक्षतिः स्यात्। केषु रोगेषु? मूत्रकृच्छ्रविकारेषु। बालानां तु स्त्रीणामेकमङ्गुलं प्रवेश्यम्।

**प्रकुञ्चो मध्यमा मात्रा बालानां शुक्तिरेव तु ॥ ८० ॥**

स्त्रीणामुत्तरबस्तौ स्नेहस्य प्रकुञ्चो मध्यमा मात्रा नोत्तमा कनिष्ठका वा। बालानां तु शुक्तिरेव मध्यमा मात्रा स्नेहस्य।

अधुनोत्तरबस्त्यवस्थानं त्रिविधाया अपि स्त्रिया वदति—

**उत्तानायाः शयानायाः सम्यक् सङ्कोच्य सक्थिनी।**
**ऊर्ध्वजान्वास्त्रिचतुरानहोरात्रेण योजयेत् ॥ ८१ ॥**
**बस्तींस्त्रिरात्रमेवं च स्नेहमात्रां विवर्धयेत्।**

उत्तानाया न त्ववाङ्मुखायाः पार्श्वस्थिताया वा। शयानाया न त्वासीनायास्तथोर्ध्वजान्वा बस्तींस्त्रिचतुरानहोरात्रेण योजयेत्। किं कृत्वा? सक्थिनी सङ्कोच्य। अनुवासने त्वेक एवाहोरात्रेण योज्य इत्यस्य भेदः। बस्तिदानं कार्यं न त्वत्राऽनुवासनवत्त्र्यहे पञ्चमे वाऽहनीति। किं कुर्वन्? स्नेहमात्रां यथास्वमर्धकर्षकर्षादिक्रमेण वर्धयेत्।

**त्र्यहमेव च विश्रम्य प्रणिदध्यात् पुनस्त्र्यहम् ॥ ८२ ॥**

त्र्यहमेव च विश्रम्य त्रीणि दिनानि विलम्ब्य च पुनः पूर्वोक्तेनैव प्रकारेण प्रणिदध्यात् प्रकुर्यात्। एष एव च न्यायो मेढ्रेऽपि योज्यः। तज्जातीयत्वादस्यार्थस्य। अत एवान्तेऽयमुपदिष्ट उभयसम्बन्धार्थम्।

युक्त्योक्तमेवाऽमुमर्थं संक्षेपेण सङ्ग्राह्य पुनराह—

**पश्चाद्विरेको वमिते ततः पश्चान्निरूहणम्।**
**सद्यो निरूढश्चाऽन्वास्यः सप्तरात्राद्विरेचितः ॥ ८३ ॥**

उत्तमशुद्ध्या शुद्धे वमिते पश्चादनन्तरं विरेकः कार्यः। यस्मात्प्रवरया शुद्ध्या शुद्धे तु वमिते पेयादिक्रमेण सप्ताहात् प्रकृतिभोजनापत्तिः। सप्ताहेनैकान्तराऽनुवासनदानेन स्निग्धस्य विरेक इति पक्षेणैव युज्यते। ततोऽनन्तरं पश्चात्परतो निरूहो यतः कृतविरेकस्य सप्ताहात् प्रकृतिभोजनापत्तौ स्नेहनार्थमनुवासनेनैकान्तरितेन स्निग्धस्य निरूहो युज्यत इति पक्षेणैव युक्तः। निरूढश्च सद्य एवाऽनुवास्यः। तथा च प्रागभ्यधायि—"अथ वातार्दितं भूयः सद्य एवाऽनुवासयेदिति"। विरेचितः सप्तरात्रादूर्ध्वमनुवास्यो यतः सप्ताहेन प्रकृतिभोजनापत्तिस्ततः स्नेहार्थमनुवासनं युक्तम्।

ननु दोषाणां धातूनां च स्नेहस्वेदाभ्यामेकलोलीभावात् कथं बस्तिर्दोषानेव निर्हरेन्न धातूनित्येतच्चोद्यं दृष्टान्तद्वारेण परिजिहीर्षुरिदमाह—

**यथा कुसुम्भादियुतात्तोयाद्रागं हरेत्पटः।**



**तथा द्रवीकृताद्देहाद्बस्तिर्निर्हरते मलान्॥ ८४॥**

कुसुम्भकुङ्कुमादियुक्ताज्जलाद्यथा पटो वासो रागं हरेद् गृह्णीयान्न कुसुम्भादिकं, तथैव द्रवीकृतात्कायाद्दोषधातूनामेकलोलीभावेऽपि बस्तिर्दोषान्निर्हरेन्न धातून्।

अधुना वायोः स्वरूपं प्रथयन् बस्तिं श्लाघयन्नाह—

**शाखागताः कोष्ठगताश्च रोगा मर्मोर्ध्वसर्वावयवाङ्गजाश्च।**
**ये सन्ति तेषां नतु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति॥ ८५॥**

सक्थिनी द्वे, द्वौ बाहू इति शाखाः,तासु गतास्तत उत्पन्नाः। एवं कोष्ठो महास्रोतः, तत्र गताः कोष्ठगताः। तथा मर्माणि च ऊर्ध्वं च सर्वे चाऽवयवाश्च मर्मोर्ध्वसर्वावयवास्तेषामङ्गं तत्र जाता मर्मोर्ध्वसर्वावयवाङ्गजाः। तत्र मर्माणि मर्मविभागे वक्ष्यन्ते। ऊर्ध्वशब्देनोर्ध्वजत्रु गृह्यते। तत्र जाता ऊर्ध्वाङ्गजा मुखरोगादयः। सर्वाङ्गजा ज्वरादयः। अवयवजाः श्वित्रादयश्च ये रोगा विद्यन्ते तेषां जन्मन्युत्पत्तौ वायोरपरः कश्चिदपि हेतुर्नास्ति। कथम्? परमतिशयेन। किञ्चिन्मात्रेणाऽनुबलभावेन पित्तश्लेष्माणावपि हेतू भवत एव। यथा पामादद्रवादीनाम्। अथाऽवयवग्रहणेनैवोर्ध्वग्रहणे लब्धे, ऊर्ध्वग्रहणं प्राधान्यख्यापनार्थम्। यथा— "ब्राह्मणा आयाताः, वसिष्ठोऽप्यायात' इति। तदेवाधिकृत्य वक्ष्यमाणः पञ्च विषयः सकलमेवोत्तरे च तन्त्रे प्रधानं तस्मात्प्रधाना ऊर्ध्वाङ्गजाः।

ननु कुतो हेतोर्मरुत एतेषु कारणत्वमित्याह—

**विट्श्लेष्मपित्तादिमलाचयानां विक्षेपसंहारकरः स यस्मात्।**
**तस्याऽतिवृद्धस्य शमाय नान्यद्बस्तेर्विना भेषजमस्ति किञ्चित्॥८६॥**

विट् च श्लेष्मा च पित्तं च विट्श्लेष्मपित्तानि तान्यादिर्येषाम्। आदिशब्देन मूत्रस्वेदादिपरिग्रहः। त एव शरीरमलिनीकरणान्मलास्तेषामाचयाः सञ्चयास्तेषां स वायुर्यस्माद्विक्षेपसंहारकरः। विक्षेपश्च संहारश्च विक्षेपसंहारौ तौ करोतीति 'कृञो हेतुताच्छील्येत्यादिना हेतौ टः'। विक्षेपसंहारकरणहेतुरित्यर्थः। तस्य क्रियावत्त्वात्। वायुश्च शेषदोषाभ्यां न कदाचिद्विक्षिप्यते संह्रियते वा। तयोर्निष्क्रियत्वात्। तस्य च वायोः प्रवृद्धस्य शमनार्थं बस्तिमन्तरेणाऽपरं भेषजं नास्ति। स्नेहस्वेदादिकं तु विद्यमानमपि न तथा समर्थमित्यगण्यत्वात्तदविद्यमानमुच्यते।

**तस्माच्चिकित्सार्ध इति प्रदिष्टः कृत्स्ना चिकित्साऽपि च बस्तिरेकैः।**
**तथा निजागन्तुविकारकारि रक्तौषधत्वेन सिराव्यधोऽपि॥ ८७॥**

तस्माद्दोषप्रधानस्य पवनस्य शमनार्थात्कारणाद्बस्तिश्चिकित्सार्ध इति कथितः। एकैश्चाऽचार्यैर्निरवशेषाऽपि चिकित्सा बस्तिः प्रदिष्टः। ननु चतुर्णां भिषजादीनामित्यादिलक्षणा चिकित्सा तत्कथं तस्या भागकल्पना कर्तुं युज्यते? नच सर्वा चिकित्सा बस्तिरिति वक्तुं शक्यते? शेषचिकित्साशास्त्रविस्तरस्यानर्थक्यप्रसङ्गात्।

तस्मादेतदयुक्तमिवाऽऽभाति। अत्रोच्यते—तथाऽपि वायुविकारा अशीतिरुक्ताः। पित्तश्लेष्मविकाराश्च षष्टिरुक्ताः। तत्र वातविकाराणां प्रधानोपक्रमो बस्तिस्तस्माच्चिकित्सार्धो बस्तिः कार्यद्वारेणोक्तः। अथवा मारुतं पित्तश्लेष्मविट्सहितं बस्तिः समूलमेवापकर्षतीत्युक्त्वा सर्वा चिकित्सा कार्यद्वारैकैरुपदिष्टः। अन्यत्राऽपि चैवं प्रायो निदर्शित आचार्यैः। तथाच मुनिः—"यानीह कर्माण्युक्तानि विसर्पविनिवृत्तये। एकतस्तानि सर्वाणि रक्तमोक्षणमेकतः-" इति। चिकित्सार्धमित्ययं तु पाठो न युक्त एव। अर्धशब्दस्य हि समविभाग एव नपुंसकत्वम्। न चाऽत्र समप्रविभागो गम्यते तस्मान्नपुंसकत्वमत्राऽन्याय्यम्। तथेत्यादि। न केवलं बस्तिर्यावत्सिराव्यधोऽपि चिकित्सार्धः सर्वा वा चिकित्सेत्युपदिष्टः। कुतः? निजेत्यादिना। निजा वातादिसमुत्था आगन्तवो विषव्रणादिसमुत्थाः। निजाश्चाऽऽगन्तवश्च ते च ते विकाराश्च निजागन्तुविकारास्तान्कर्तुं शीलमस्य तन्निजागन्तुविकारकारि तच्च तद्रक्तं च निजागन्तुविकारकारि रक्तं तस्यौषधत्वेन। तत्र विसर्पविद्रधिप्रभृतिरोगविशेषोपशमकरणाच्चिकित्सार्धः सिराव्यध उपदिष्टः। तथाऽपरेऽपि ये रोगाः शीतोष्णस्निग्धरूक्षाद्यैरुपक्रमैरनुपशान्तास्तेऽपि सिराव्यधसाध्याः। अत एव सर्वाऽपि चिकित्सा सिराव्यध उक्त इति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामेकोनविंशोऽध्यायः॥ १९॥

---

# विंशोऽध्यायः।

पञ्चकर्मोक्तिप्रस्तावे वमनविरेचकान्वासननिरूहानुक्त्वा नस्यविधिमाह—

**अथाऽतो नस्यविधिमध्यायं व्याख्यास्यामः।**

**ऊर्ध्वजत्रुविकारेषु विशेषान्नस्यमिष्यते।**

जत्रु वक्षोंऽसयोः सन्धिः। जत्रुण ऊर्ध्वमूर्ध्वजत्रु। 'मयूरव्यंसकादित्वात्समासः'। तत्र विकारा ऊर्ध्वजत्रुविकारास्तेषूर्ध्वजत्रुविकारेषु शिरोरोगादिषु विषये वमनसिराव्यधादयोऽपीष्यन्त एव। विशेषेण तु नस्यमिष्यते। 'नासायां भवं नस्यम्। 'तत्र भव इति यत्। नासिकायाः पद्व इति नासादेशः'।

ननु किमिति नस्यमेतेषु रोगेषु विशेषेणेष्टमित्याह—

**नासा हि शिरसो द्वारं तेन तद्व्याप्य हन्ति तान्॥ १॥**

यस्माद् घ्राणं शिरोद्वारं तेन द्वारेण श्रोत्रशृङ्गाटकप्राप्तमूर्ध्वनेत्रकण्ठादिसिरामुखानुप्रवेशेन तच्छिरो व्याप्य तान्विकारान् हन्ति।

**विरेचनं बृंहणं च शमनं च त्रिधाऽपि तत्।**

तत्र नस्यं विरेचनबृंहणशमनादिभेदेन त्रिधा स्यात्।



तत्र पूर्वं विरेचनाख्यस्योपयोगमाह—

**विरेचनं शिरःशूलजाड्यस्यन्दगलामये ॥ २ ॥**
**शोफगण्डकृमिग्रन्थिकुष्ठाऽपस्मारपीनसे ।**

शिरःशूलादिषु विरेचनं नस्यमिष्यते। अपस्मारो यद्यप्यूर्ध्वजत्रुस्थितो न भवति तथाऽपि विरेचननस्येन शाम्यतीति तदुपादानम्। उपलक्षणं चेदम्। कफप्रकोपाऽऽस्यवैरस्यगन्धाज्ञानादिष्वपि विरेचनमेव हितम्।

**बृंहणं वातजे शूले सूर्यावर्ते स्वरक्षये ॥ ३ ॥**
**नासाऽऽस्यशोषे वाक्सङ्गे कृच्छ्रबोधेऽवबाहुके ।**

वातोद्भवशूलादिषु बृंहणं नस्यं हितम्। सूर्यावर्तः शिरोरोगविशेषः। कृच्छ्रबोधः कृच्छ्रोन्मीलनम्। अवबाहुको वातव्याधिविशेषः।

**शमनं नीलिकाव्यङ्गकेशदोषाक्षिराजिषु ॥ ४ ॥**

नीलिकादिषु शमनं नस्यं हितम्। नीलिकाव्यङ्गौ क्षुद्ररोगेषु वक्ष्यमाणौ। केशदोषः केशशातः।

**यथास्वं यौगिकैः स्नेहैर्यथास्वं च प्रसाधितैः ।**
**कल्कक्वाथादिभिश्चाद्यं मधुपट्वासवैरपि ॥ ५ ॥**

ये ये स्नेहा यथास्वं तैः। किम्भूतैः ? योगिकैर्योगार्हैः सर्षपतैलादिभिर्न तु घृतादिभिः। तथा यथास्वं मरीचशुण्ठ्यादिभिः प्रसाधितैः संस्कृतैः। तथा कल्ककाथस्वरसादिभिश्च यथास्वं कफघ्नैर्गैरिकर्णिकादिजैराद्यं विरेचनाख्यं नस्यं भवति। न केवलमेतैर्यावन्माक्षिकादिभिश्च। पटुः सैन्धवादिः। आसवो मद्यविशेषः।

**बृंहणं धन्वमांसोत्थरसासृक्खपुरैरपि ।**
**शमनं योजयेत्पूर्वैः क्षीरेण च जलेन च ॥ ६ ॥**

बृंहणं नस्यं धन्वोत्थमांसोद्भवरसैः स्यात्। तथाऽसृजा रक्तेन धन्वोत्थेनैव। तथा खपुरैर्निर्यासविशेषैः। अपिशब्दादन्यैरपि पूर्वोक्तैः स्नेहैरतीक्ष्णैर्बृंहणं भवति। शमनं नस्यं पूर्वोक्तैरतीक्ष्णैः स्नेहैर्घृतादिभिस्तथा मांसरसादिभिर्योजयेत्। तथा क्षीरेण जलेन चेति। सुश्रुतस्तु स्पष्टतरमुवाच—"तत्तु नस्यं देयं वाताभिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुणकर्णशूलकर्णक्ष्वेडतिमिरस्वरोपघातनासारोगास्यशोषापबाहुकाऽकालजवलीपलितप्रादुर्भावदारुणप्रबोधेषु वातपैत्तिकेषु चान्येषु मुखरोगेषु वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति'। शिरोविरेचनं श्लेष्मणाऽभिव्याप्ततालुकण्ठशिरसामरोचकशिरोगौरवशूलपीनसाऽर्धावभेदककृमिप्रतिश्यायाऽपस्मारगन्धाज्ञानेष्वन्येषु चोर्ध्वजत्रुगतेषु कफजेषु विकारेषु शिरोविरेचनद्रव्यैस्तत्सिद्धेन वा स्नेहेनेति। तथा सम्यग्विशुद्धे शिरसि सर्पिर्नस्यं निषेचयेत्। अवपीडस्तु शिरोविरेचनवदभिष्यन्दसर्पदष्टविसंज्ञेभ्यो दद्याच्छिरोविरेचनद्रव्याणामन्यतममवपीड्याऽवपिष्य चेतोविकारकृमिविषाभिपन्नानां चूर्णं प्रधमेत्। शर्करेक्षुरसक्षीरघृतमांसरसानामन्यतमं क्षीणा-

नां शोणितपित्ते च विदध्यात्। कृशदुर्बलभीरूणां सुकुमारस्य योषिताम्। श्वताः स्नेहाः शिरःशुद्ध्यै कल्कस्तेभ्यो यथा हित' इति।

अधुनाऽन्यानपि नस्यविशेषानाह—

**मर्शश्च प्रतिमर्शश्च द्विधा स्नेहोऽत्र मात्रया।**

एषु नस्यभेदेषु मध्ये मर्शाख्यः प्रतिमर्शाख्यश्चेति स्नेहो द्विधा भेदद्वयेन भवति। कथम्? मात्रया मात्राभेदेन नतु वस्तुभेदेन।

**कल्काद्यैरवपीडस्तु तीक्ष्णैर्मूर्धविरेचनः ॥ ७ ॥**

तुरवधारणे भिन्नक्रमः। कल्काद्यैरेवाऽवपीडो न स्नेहेन। स चाऽवपीडस्तीक्ष्णैः शुण्ठ्यादिभिः कल्ककाथरसाद्यैर्न मृदुभिः। मूर्धविरेचनाख्यं नामान्तरमस्य। अतीक्ष्णैस्तु शमनसंज्ञमेव।

बिरेचनस्य प्रकारान्तरमाह—

**ध्मानं विरेचनश्चूर्णो,**

चूर्णो मरीचादिभिः कृतो विरेचनो बहिर्दोषनिरसनो ध्मानं प्रध्मानाख्यं नस्यं स्यात्। कथम्? नासया प्रणीयमानः।

कथं पुनरसौ नासायां ध्मापयितव्य इत्याह—

**युञ्ज्यात्तं मुखवायुना।**

**षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ॥ ८ ॥**

**स हि भूरितरं दोषं चूर्णत्वादपकर्षति।**

युञ्ज्यात्तं चूर्णं मुखवायुना फूत्काराख्येन प्रवेशयेत्। कथम्? नाड्या करणभूतया। किम्भूतया? षडङ्गुलानि यस्याः सा षडङ्गुला। द्वे मुखे यस्याः सा द्विमुखा। षडङ्गुला द्विमुखा च षडङ्गुलद्विमुखा तया। तथा भेषजगर्भया त्रिकट्वादिचूर्णभरितया। स हि चूर्णो भूरितरं बहुतरं दोषं चूर्णत्वादपकर्षति निर्हरति। यथा कल्ककाथादयः। ततस्माद्विरेचनाख्योऽयमित्यर्थः।

अधुना मर्शस्नेहस्य परिमाणमधिकृत्याह—

**प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धतात् ॥ ६ ॥**

**यावत्पतत्यसौ बिन्दुर्दशाष्टौ षट् क्रमेण ते।**

**मर्शस्योत्कृष्टमध्योना मात्रास्ता एव च क्रमात् ॥ १० ॥**

**बिन्दुद्वयोनाः कल्कादेः,**

प्रदेशिन्यङ्गुष्ठसमीपजाङ्गुली तस्याः पर्वद्वयं तस्मात्। किम्भूतात्? पूर्वं मग्नं पश्चात्समुद्धृतं तस्मान्मग्नसमुद्धृतात् तर्जनीपर्वद्वयाद्यावत्परिमाणं पतत्यसौ बिन्दुरुच्यत इति शेषः। ते बिन्दवो यथासङ्ख्यं मर्शस्य दशोत्कृष्टा मात्रा। अष्टौ मध्यमा मात्रा। षट् कनिष्ठा मात्रा। ता एव क्रमान्मात्रा बिन्दुद्वयेनोना कल्कस्वरसादेः। तेनाऽष्टौ बिन्दव उत्तमा मात्रा, षण्मध्यमा, चत्वारः कनिष्ठेत्यवतिष्ठते।

यावदिति यत्परिमाणमस्येति 'यत्तदेतेभ्यः परिमाणे वतुप् । आ सर्वनाम्नः— इत्याकारादेशः' ।

अधुना येषां नस्यमयुक्तं तानाह—

**योजयेन्न तु नावनम् ।**
**तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ॥ ११ ॥**
**भुक्तभक्तशिरःस्नातस्नातुकामस्रुतासृजाम् ।**
**नवपीनसवेगार्तसूतिकाश्वासकासिनाम् ॥ १२ ॥**
**शुद्धानां दत्तबस्तीनां तथाऽनार्तवदुर्दिने ।**
**अन्यत्राऽत्ययिकाद्व्याधेः,**

तोयादि पीतं यैस्तेषाम् । 'आहिताग्न्यादित्वात्परनिपातः' । तथा पातुमिच्छतां नावनं नस्यं नैव योजयेत् । तोयादिपीतानां पातुमिच्छतां च प्रयोजितं नस्यं नासास्यदोषदेहतिमिरशिरोरोगान् कुर्यात् । भुक्तभक्तस्य च दोषा ऊर्ध्वस्रोतांस्यावृत्य छर्दिश्वासकासप्रतिश्यायान् जनयेयुः । शिरःस्नातस्य शिरोऽक्षिकर्णशूलकण्ठरोगपीनसहनुमन्यास्तम्भार्दितशिरःकम्पान् । स्नातुकामस्य च मूर्ध्नि स्तिमितो दोषो जाड्यारुचिपीनसान् । स्रुतरक्तस्य च क्षामतामरुचिमग्निसदनं च । नवप्रतिश्यायस्य स्रोतोरोधाद् दुष्टप्रतिश्यायकृमिकण्डूविचर्चिकारोगान् । मूत्रितोच्चारितादिवेगार्तानां भृशतरं वेगविधारणजान् विकारान् । सूतिकायाः स्रुतरक्तदोषान् । श्वासकासिनो व्याधिविवृद्धिम् । शुद्धानां कृतवमनविरेचनानां श्वासकासस्वरेन्द्रियहानिशिरोगौरवकृमिकण्डूदोषान् । दत्तबस्तीनां विवृतस्रोतस्तयाऽतिव्याप्त्या श्वासकासादीन् । तथाऽनार्तवदुर्दिनेऽपि सहसैव शैत्याच्छिरोरुग्वेपथुस्तैमित्यतालुनेत्रकण्डूपाकमन्यास्तम्भकण्ठरोगप्रतिश्यायारूंषिकाः । एषु च नस्यदोषेषु जातेषु यथास्वमायतनं दोषोद्रेकं चाऽवेक्ष्य स्नेहस्वेदशिरोविरेकवक्त्रलेपसेकतीक्ष्णावपीडधूमगण्डूषादीनि यथास्वं कुर्यात् । सङ्ग्रहे चोक्तम्—" गर्भिण्या भक्तद्वेषज्वरमूर्च्छाऽर्धावभेदकाः स्युः । अपत्यं च व्यङ्गं विकलेन्द्रियमुन्मादापस्मारयुक्तं वा स्यात् । विशेषेण तु गर्भिणी रूक्षे नस्यकर्मणि वर्षाभूकाकोलीकपिकच्छुभिः शृतं पयः पिबेत् । बलाविदार्यंशुमतीमेदाभिर्वैभिरेव च शृतं हविर्वातहरसिद्धश्च स्नेहः शिरोबस्तौ कर्णपूरणे च योज्यः । सर्वं च बृंहणमन्नपानमिति " । तोयपीतादिषु सदैव किं न योज्यम् ? इत्याह— अन्यत्रेत्यादि । आत्ययिके व्याधौ नस्यं योज्यमेव ।

साम्प्रतं यत्र काले यत्र च दोषे नस्यं प्रयोज्यं तद्दर्शनार्थमाह—

**अथ नस्यं प्रयोजयेत् ॥ १३ ॥**
**प्रातः श्लेष्मणि, मध्याह्ने पित्ते, सायंनिशोश्चले ।**

श्लेष्मरोगे प्रातर्नस्यं प्रयोजयेत् । पित्तरोगेषु मध्याह्ने । वातेऽपराह्णे रात्रौ च ।

कारणे कार्योपचारात्कफरोगः श्लेष्मशब्देनोक्तः । तेन श्लेष्मरोगादिषु प्रातर्नस्यं योज्यम् । सङ्ग्रहे विशेषः—"लालास्रावसुप्तिप्रलापदन्तकटकटायनक्कथनकृच्छ्रोन्मीलनपूतिमुखकर्णनादतृष्णार्दितशिरोरोगश्वासकासोन्निद्रेषु रात्राविति ।"

स्वस्थवृत्ते तु पूर्वाह्णे शरत्कालवसन्तयोः ॥ १४ ॥
शीते मध्यन्दिने ग्रीष्मे सायं वर्षासु सातपे ।

तुरवधारणे । स्वस्थवृत्ते शरदि वसन्ते च पूर्वाह्ण एव नस्यं योज्यम् । शीते हेमन्तशिशिरलक्षणे मध्याह्ने । ग्रीष्मे सायमपराह्णे सातपे दृश्यमाने रवौ वासरे प्रयोजयेत् ।

अधुना दोषापेक्षया नस्यकालनियममाह—

वाताभिभूते शिरसि हिध्मायामपतानके ॥ १५ ॥
मन्यास्तम्भे स्वरभ्रंशे सायंप्रातर्दिनेदिने ।
एकाहान्तरमन्यत्र सप्ताहं च तदाचरेत् ॥ १६ ॥

वाताभिभूतमूर्धादिषु स्वरभ्रंशान्तेषु सायम्प्रातः पूर्वाह्णाऽपराह्णयोः प्रतिदिनं च नैकाहान्तरितम् । अन्यत्र वाताभिभूतमूर्धादिभ्योऽन्यस्मिन् रोगे एकाहान्तरं सप्ताहं च नस्यमाचरेत् । सप्ताहादूर्ध्वं नस्यं न विदध्यादित्यर्थः ।

इदानीं यादृशस्य पुरुषस्य यथास्थितस्य नस्यं देयं तदाह—

स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च ।
निवातशयनस्थस्य जत्रूर्ध्वं स्वेदयेत् पुनः ॥ १७ ॥

पूर्वं स्निग्धं पश्चात्स्विन्नमुत्तमाङ्गं शिरो यस्य तस्य तथा प्राक् पूर्वं कृतमावश्यकमवश्यकरणीयमुच्चारमूत्रोत्सर्गदन्तधावनादिकं येन स प्राक्कृतावश्यकस्तस्य तथा निवातस्थाने शयनं यत्तत्र स्थितस्य सतो भूयो जत्रूर्ध्वं स्वेदयेत् ।

अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते ।
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्धनि नामिते ॥ १८ ॥
नासापुटं पिधायैकं पर्यायेण निषेचयेत् ।
उष्णाम्बुतप्तं भैषज्यं प्रनाड्या पिचुनाऽथवा ॥ १९ ॥

अथाऽनन्तरमुत्तानस्पष्टस्थितशरीरस्य सतो हस्तचरणे प्रसारिते तथा किञ्चिदुन्नतचरणस्य किञ्चिच्छिरसि नामिते सति नासापुटमेकं पिधाय स्थगयित्वा पर्यायेण, नतु युगपद्भैषज्यं निषेचयेत् । कीदृशमुष्णाम्बुतप्तमुष्णोदकोष्णीकृतम् । केन परिषेचयेत् ? प्रनाड्याऽथवा पिचुना कार्पासादिमयेन ।

दत्ते पादतलस्कन्धहस्तकर्णादि मर्दयेत् ।

दत्ते नस्ये सति पादतलस्कन्धहस्तकर्णादि मर्दयेत् । आदिशब्देन ग्रीवाललाटादिपरिग्रहः । सुश्रुते चाऽभ्यधायि—"वस्त्रावच्छादितनेत्राय वामहस्तप्रदेशिन्योन्नामितनासिकाग्राय विशुद्धस्रोतासि दक्षिणहस्तेन स्नेहमुष्णाम्बुप्रतप्तं रजतादिशु-

क्षीनामन्यतमस्थमनवच्छिन्नधारमासिञ्चेदिति" ।

**शनैरुच्छिद्य निष्ठीवेत्पार्श्वयोरुभयोस्ततः ॥ २० ॥**

ततो मर्दनान्तरं शनैरुच्छिद्य पार्श्वयोरुभयोर्निष्ठीवेद् अनभ्यवहरन् । कफसहितमभ्यवहृतमग्निमवसादयेद्दोषं च संवर्धयेत् । एकपार्श्वनिष्ठीवेनन सर्वाः सिरा भेषजेन सम्यग्व्याप्यन्ते ।

**आभेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत् ।**

एवमनेन क्रमेणाऽऽभेषजक्षयाद् द्विस्त्रिर्वा नस्यं कुर्यात् । न तु नस्यमात्रा सकृदेव प्रक्षेप्तव्या हीनमात्रं चौषधं न देयम् । तद्धि दोषानुत्क्लेश्यानिर्हरन्गौरवारुचिकासप्रसेकपीनसच्छर्दिकण्ठरोगान् कुर्यात् । अधिकमतियोगाद्दोषान् कुर्यात् । सकृदेव सर्वं दत्तमनुच्छिद्यमानं शिरोरोगप्रतिश्यायघ्राणक्लेदानुच्छ्वासोपरोधं च कुर्यात् । अत्युष्णं दाहपाकज्वररक्ताङ्गमूर्छाश्रमान् । अतिशीतं हीनदोषानेव । अत्युन्नतशिरसोऽसम्यक्प्रतिपद्यमानं तानेव हीनदोषान् । अत्यवनतशिरसो दूरगमनान्मूर्छाजाड्यज्वरान् । सङ्कुचितगात्रस्य सम्यग्धमनीरप्राप्नुवद्दोषोत्क्लेशं कुर्यात् ।

यदि च नस्ये दीयमाने भेषजवेगादसात्म्येन सञ्जातमूर्छायां प्रतीकारमाह—

**मूर्छायां शीततोयेन सिञ्चेत्परिहरन् शिरः ॥ २१ ॥**

मूर्छायां सत्यां शीतजलेन मूर्धवर्जं सिञ्चेत् । सङ्ग्रहेऽप्युक्तम्—नच नस्ये निषिच्यमाने कोपहासव्याहारस्यन्दनोच्छिन्दनान्याचरेत् । 'तथाहि शिरोरुक्प्रतिश्यायकासतिमिरखलितपलितव्यङ्गतिलकालकमुखदूषकानां सम्भव इति' ।

**स्नेहं विरेचनस्यान्ते दद्याद्दोषाद्यपेक्षया ।**

विरेचनस्यावसाने देशदोषसात्म्याद्यपेक्षया स्नेहमनुसंन्यसेत् । तत्रान्तरे चोक्तम्—"अथ नस्यार्हं नरमव्याहतवेगं धौतान्तर्बहिर्मुखमवस्थितशिरसं प्रायोगिकधूमपानविशुद्धस्रोतसं स्वास्तीर्णनिवातशयनस्थमुत्तानशीर्षमीषदुन्नतपादं प्रसारितचरणं च जत्रूर्ध्वं पाणितापेन पुनः पुनः स्वेदयेदिति ।

**नस्यान्ते वाक्शतं तिष्ठेदुत्तानः,**

नस्यावसाने वाक्शतं मात्राशतमुत्तानो निद्रामासेवमानस्तिष्ठेत् ।

**धारयेत्ततः ॥ २२ ॥**

**धूमं पीत्वा कवोष्णाम्बुकवलान् कण्ठशुद्धये ।**

ततो वाक्शतावस्थानादनन्तरमीषदुष्णजलकवलान् धारयेत् । किमर्थम् ? कंठशुद्धये, उत्क्लिष्टदोषशान्तये । किं कृत्वा ? धूमं विरेचनाद्यन्यतमं यथायोगं पीत्वा ततोऽस्य स्नेहोक्तविधिमाचारमादिशेत् ।

**सम्यक्स्निग्धं सुखोच्छ्वासस्वप्नबोधाक्षपाटवम् ॥ २३ ॥**

सम्यक्स्निग्धे शिरसि सुखोच्छ्वासादयः स्युः । सङ्ग्रहे चोक्तम्—"सम्यक्स्निग्धे मूर्ध्नि विरिक्ते वा सुखोच्छ्वासनिःश्वाससुखसुप्तबोधाक्षिपाटवानि स्युः" ।

**रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्धशून्यता ।**

रूक्षे तु शिरस्यक्षिस्तब्धता तथा नासायामास्ये च शोषो मूर्धशून्यता च स्यात् ।

**स्निग्धेऽतिकण्डूर्गुरुता प्रसेकारुचिपीनसाः ॥ २४ ॥**

अतिस्निग्धे कण्ड्वादयः स्युः ।

**सुविरिक्तेऽक्षिलघुता स्वरवक्त्रविशुद्धयः ।**

सुविरिक्ते सम्यग्विरिक्तेऽक्षिलघुतादयः स्युः ।

**दुर्विरिक्ते गदोद्रेकः क्षामताऽतिविरेचिते ॥ २५ ॥**

दुर्विरिक्ते गदोद्रेको रोगस्याऽधिक्यमतिविरेचिते क्षामता कृशता स्यात् ।

अधुना प्रतिमर्शस्य विषयं सूचयितुमाह—

**प्रतिमर्शः क्षतक्षामबालवृद्धसुखात्मसु ।**
**प्रयोज्योऽकालवर्षेऽपि,**

प्रतिमर्शः क्षतादिषु प्रयोज्यः । अकालवर्षणेऽपि कार्यः ।

**न त्विष्टो दुष्टपीनसे ॥ २६ ॥**
**मद्यपीतेऽबलश्रोत्रे कृमिदूषितमूर्धनि ।**
**उत्कृष्टोत्क्लिष्टदोषे च,**

दुष्टपीनसे तु न प्रयोज्यः । दुष्टपीनसो नासारोगेषु वक्ष्यमाणः । तथा मद्यपीते तथाऽबलश्रोत्रे रुद्धश्रवणमार्गे तथा कृमिभिर्दूषितो मूर्धा यस्य तस्मिन् कृमिपीडितशिरसि तथोत्कृष्टो वृद्धिं गतस्तथोत्क्लिष्टः प्रचलो दोषो यस्य तस्मिंश्च प्रतिमर्शो न योज्यः ।

केन प्रकारेण न योज्य इत्याह—

**हीनमात्रतया हि सः ॥ २७ ॥**

हि यस्मात्, हीनमात्रतया हीना मात्रा यस्य स हीनमात्रस्तस्य भावो हीनमात्रता तया यस्मादसौ प्रयुज्यते । एषां चोदीर्णदोषत्वात् तावता दोषोत्क्लेश एव भवति, न शमः ।

**निशाहर्भुक्तवान्ताहःस्वप्नाध्वश्रमरेतसाम् ।**
**शिरोभ्यञ्जनगण्डूषप्रस्रवाञ्जनवर्चसाम् ॥ २८ ॥**
**दन्तकाष्ठस्य हासस्य योज्योऽन्तेऽसौ द्विबिन्दुकः ।**

असौ प्रतिमर्शो द्विबिन्दुको निशादीनां पञ्चदशानां कालानामन्ते प्रयोज्यः ।

**पञ्चसु स्रोतसां शुद्धिः क्लमनाशस्त्रिषु क्रमात् ॥ २९ ॥**
**दृग्बलं पञ्चसु ततो दन्तदार्ढ्यं मरुच्छमः ।**

तत्र निशाहर्भुक्तवान्ताहःस्वप्नाख्येषु पञ्चसु कालेषु प्रतिमर्शे प्रयुक्ते स्रोतसां शुद्धिर्भवति । क्रमात्क्रमेणैव पठितेष्वध्वश्रममैथुनानां त्रयाणामन्ते प्रतिमर्शे दत्ते सति श्रमनाशः स्यात् । उपलक्षणं चेदम् । मनःप्रसादशिरोलाघवेऽपि भवतः ।

एवं शिरोभ्यञ्जनादिषु पञ्चस्वन्ते प्रतिमर्शे योजिते सति दृष्टेर्बलं स्यात् । ततोऽनन्तरं दन्तकाष्ठहासयोरन्ते यथासङ्ख्येन द्विजदृढत्वं पवनशमश्च स्यात् ।

अधुनाऽञ्जनस्य धूमादीनां च पुरुषविशेषे नियमं करोति—

**न नस्यमूनसप्ताब्दे नाऽतीताऽशीतिवत्सरे ॥ ३० ॥**
**न चोनाऽष्टादशे धूमः कवलो नोनपञ्चमे ।**
**न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ॥ ३१ ॥**

ऊनसप्तवर्षे नस्यं न योज्यम् । तथाऽतिक्रान्ताशीतिवर्षे च नस्यं न प्रयोज्यम् । अपूर्णाऽष्टादशे वर्षे धूमो न प्रयोज्यः । कवलोऽपूर्णपञ्चवत्सरे न प्रयोज्यः । ऊनदशमवर्षे शुद्धिर्वमनविरेकादिका न प्रयोज्या । तथा अतीतसप्ततिवर्षे शुद्धिर्न योज्या ।

**आजन्ममरणं शस्तः प्रतिमर्शस्तु बस्तिवत् ।**
**मर्शवच्च गुणान् कुर्यात्स हि नित्योपसेवनात् ॥ ३२ ॥**
**न चाऽत्र यन्त्रणा नाऽपि व्यापद्भ्यो मर्शवद्भयम् ।**

प्रातमर्शः पुनर्बस्तिरिव शस्तो हितः । कथम् ? आजन्ममरणं जन्ममरणे चावधिं कृत्वा प्रतिमर्शो हित इत्यर्थः । स च प्रतिमर्शो नित्योपसेवनात् सन्ततमभ्यस्यमानो मर्श इव गुणान् सुखोच्छ्वासादीन् कुर्यात् । अत्र च प्रतिमर्शे यन्त्रणोष्णोदकोपचारी स्यादित्यादिका नास्ति । न च व्यापद्भ्योऽच्छित्तब्धता शोष इत्यादिभ्यो भयं मर्श इव अस्तीति । मर्श इव मर्शवत् । 'सप्तम्यन्ताद्वतिः' ।

**तैलमेव च नस्यार्थे नित्याभ्यासेन शस्यते ॥ ३३ ॥**
**शिरसः श्लेष्मधामत्वात्स्नेहाः स्वस्थस्य नेतरे ।**

तैलमेव नित्याभ्यासेन प्रतिमर्शन्यायेन नस्यार्थे श्रेष्ठं भवति । कुतो हेतोर्मूर्ध्नः कफस्थानत्वात् । न चापरे स्नेहास्तेषां श्लेष्मलत्वादिति भावः ।

**आशुकृच्चिरकारित्वं गुणोत्कर्षापकृष्टता ॥ ३४ ॥**
**मर्शे च प्रतिमर्शे च विशेषो न भवेद्यदि ।**
**को मर्शं सपरीहारं सापदं च भजेत्ततः ॥ ३५ ॥**
**अच्छपानविकाराख्यौ कुटीवाताऽऽतपस्थिती ।**
**अन्वासमात्राबस्ती च तद्वदेव च निर्दिशेत् ॥ ३६ ॥**

आशुकारी मर्शश्चिरकारी तु प्रतिमर्शः । गुणोत्कर्षत्वयुक्तो मर्शो गुणापकृष्टतान्वितश्च प्रतिमर्श इत्यनयोर्भेदः । यदि च मर्शे प्रतिमर्शे च विशेषो न स्यात्तदा मर्शं सपरीहारं सव्यापदं च को भजेत् ? न कश्चिद्भजेदित्यर्थः । प्रतिमर्शविशेषवदच्छपानविकाराख्यौ स्नेहौ शीघ्रकारित्वादिना विशेषेण निर्दिशेत् । तथा कुटीप्रवेशस्थित्या यद्रसायनमुपयुज्यते यच्च वातातपाद्यपरिहारस्थित्या रसायनं क्रियते, ते च द्वे अपि तथैव विशेषेण निर्दिशेत् । तथान्वासनं मात्राबस्तिश्च तावप्येवं चिरकारिशीघ्रकारित्वादिगुणैर्विनिर्दिशेत् ।



इदानीमणुतैलं निर्दिदिक्षुराह—

जीवन्तीजलदेवदारुजलदत्वक्सेव्यगोपीहिमम्
दार्वीत्वङ्मधुकप्लवागुरुवरापुण्ड्राह्वबिल्वोत्पलम्।
धावन्यौ सुरभिः स्थिरे कृमिहरं पत्रं त्रुटिं रेणुकं
किञ्जल्कं कमलाह्वयं शतगुणे दिव्येऽम्भसि क्वाथयेत्॥ ३७॥
तैलाद्रसं दशगुणं परिशेष्य तेन तैलं पचेच्च सलिलेन दशैव वारान्।
पाके क्षिपेच्च दशमे सममाजदुग्धं नस्यं महागुणमुशन्त्यणुतैलमेतत्॥

जीवन्तीत्यादि। जीवन्त्यादीनि द्रव्याणि दिव्ये जले क्वाथयेत्। गोपी सारिवा। प्लवं गोपालदमनाख्यम्। पुण्ड्राह्वं पौण्डरीकम्। धावन्यौ कण्टकारिकामहोटिकाख्ये। सुरभिः शल्लकी। स्थिरे शालिपर्णीपृश्निपर्ण्यौ। कृमिहरं विडङ्गम्। अत्र तैलसमानि द्रव्याणि ग्राह्याणीति वैद्यव्यवहारः। आकाशादेः पटादिभिर्गृहीतं जलं दिव्यमुच्यते। तत्तैलाच्छतगुणं गृहीत्वा तावत्क्काथयेद् यावद्दशगुणो रसस्तैलात्स्यात्। तेन क्वाथेन च तैलं दशवारान्पचेत्। दशमे च पाके तैलसममजाक्षीरं क्षिपेत्। ततः पुनः पचेत्। इति तत्तैलं महागुणमणुतैलसञ्ज्ञं कथयन्ति। अणुषु तैलमणुतैलम्। अणूनीन्द्रियस्रोतांसि प्रविशतीत्यर्थः।

घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवाऽऽस्यवक्षसः।
दृढेन्द्रियास्त्वपलिता भवेयुर्नस्यशीलिनः॥ ३८॥

नस्यशीलिनो निबिडोच्चतररमणीयत्वगादयः स्युः। त्वक् च स्कन्धश्च ग्रीवा चाऽऽस्यं च वक्षश्च एतेषां समाहारः त्वक्स्कन्धग्रीवास्यवक्षः। घनोन्नतप्रसन्नं त्वक्स्कन्धग्रीवास्यवक्षो येषां ते घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः। तथा पुष्टेन्द्रियाः पलितवर्जिताश्च भवेयुः।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां विंशोऽध्यायः॥ २०॥

# एकविंशतितमोऽध्यायः।

ऊर्ध्वाङ्गचिकित्साप्रसङ्गाद्धूमपानविधिं जिगदिषुराह—

अथाऽतो धूमपानविधिमध्यायं व्याख्यास्यामः।
जत्रूर्ध्वं कफवातोत्थविकाराणामजन्मने।
उच्छेदाय च जातानां पिबेद् धूमं सदाऽऽत्मवान्॥ १॥

आत्मवान् सुमतिर्हिताहारविहारो जत्रुण ऊर्ध्वं श्लेष्मवातोद्भवानां विकाराणां रोगाणामजन्मनेऽनुत्पत्त्यै तथोत्पन्नानामुच्छेदाय विनाशाय सदा धूमं पिबेत्।

स्निग्धो मध्यः स तीक्ष्णश्च वाते वातकफे कफे।

योज्यः,

स च धूमः स्निग्धमध्यतीक्ष्णभेदेन त्रिधा । यथाक्रमं वाते स्निग्धो वातकफे मध्यः कफे तीक्ष्णो योज्यः ।

न रक्तपित्तार्तिविरिक्तोदरमेहिषु ॥ २ ॥
तिमिरोर्ध्वाऽनिलाऽऽध्मानरोहिणीदत्तबस्तिषु ।
मत्स्यमद्यदधिक्षीरक्षौद्रस्नेहविषाशिषु ॥ ३ ॥
शिरस्यभिहते पाण्डुरोगे जागरिते निशि ।

रक्तपित्तार्त्यादिषु धूमो नावचारणीयः । ननु वाते वातकफे कफे च धूमस्योक्तत्वात्पित्तार्तौ प्राप्तिरेव नास्ति, तत्किं प्रतिषेधेन ? ब्रूमः—वातप्रकृतेर्वातपित्तार्तौ सत्यां कश्चिद्भिषक्पाशो भ्रान्त्या प्रकृत्यनुरूपोपक्रमचिकीर्षया धूमं योजयेत्तन्निषेधार्थमिदमुक्तम् । अथवा पित्तार्तप्रकृतेर्वातश्लेष्मव्याध्युत्पत्तौ धूमो न योज्य इति प्रतिपादनार्थमिदं गदितम् । अशिशब्दो मत्स्यादिषु विषान्तेषु प्रत्येकं योज्यः । अत्र च यथासम्भवं पानं मद्यादेरशनं च मत्स्यादेरशनशब्देनेहोच्यते । चतुर्विधेष्वाहारेष्वशनशब्देनास्त्येव व्यवहारः । यथा 'मात्राशी सर्वकालं स्यादिति' । केचिच्च यवागूपायिन्यपि धूमपानं नेच्छन्ति ।

रक्तपित्तान्ध्यबाधिर्यतृण्मूर्छामदमोहकृत् ॥ ४ ॥
धूमोऽकालेऽतिपीतो वा,

मूर्च्छा संज्ञानाशः । मोहश्चित्तनाशः । 'मुह वैचित्य इति पाठात्' । आन्ध्यबाधिर्यग्रहणमुत्तमाङ्गरोगोपलक्षणार्थम् । तेन सङ्ग्रहोक्तमर्दितमपि गृह्यते । धूमोऽकाले पूर्वोक्ते रक्तपित्तार्त्यादौ पीतो रक्तपित्तादीन् कुर्यात् । अप्रतिसिद्धेऽपि काले क्षुतादावतिशयेन पीतो रक्तादिकृत् ।

तत्र शीतो विधिर्हितः ।

तत्र रक्तपित्ताद्यार्तौ विधिरुपक्रमो यथास्वं सर्पिःपाननस्यालेपपरिषेकादिः शीतो विधिर्हितः ।

इदानीं त्रयाणां धूमानां पृथक्कालं दर्शयन्नाह—

क्षुतजृम्भितविण्मूत्रस्त्रीसेवाशस्त्रकर्मणाम् ॥ ५ ॥
हासस्य दन्तकाष्ठस्य धूममन्ते पिबेन्मृदुम् ।
कालेष्वेषु निशाऽहारनावनान्ते च मध्यमम् ॥ ६ ॥
निद्रानस्याञ्जनस्नानच्छर्दितान्ते विरेचनम् ।

क्षुतादीनामष्टानामन्ते मृदुं स्नेहनाख्यं धूमं पिबेत् । एषु क्षुतादिषु कालेषु निशाहारनावनान्तेषु च मध्यमं धूमं पिबेत् । 'मध्यममिति मध्यान्म इति मः' । विरेचनाख्यं धूमं निद्रादीनामन्ते पिबेत् । नावननस्ययोरेकार्थयोरिहोपादानान्नस्यक्रमेण धूमं पिबेदिति ग्रन्थकृता प्रतिपादितम् । तेन स्निग्धनस्यान्ते स्निग्धं मृद्वपर-

पर्यायं धूमं पिबेत्। आचार्योपदेशाच्च क्षुताद्यन्तेषु च स्निग्धं धूमं पिबेत्। मध्याह्नस्यान्ते मध्यमं धूमं पिबेत्। कालेष्विति बहुवचनाच्च क्षुदादीनामष्टानामन्तादिषु च मध्यमं धूमं पिबेत्। एवं निद्रान्तस्यान्ते विरेचनं धूमं पिबेत्। कालेष्विति वचनान्निशाशब्दोऽत्र विरेचनपर्यायः।

साम्प्रतमत्र नेत्रस्वरूपमाह—

**बस्तिनेत्रसमद्रव्यं त्रिकोशं कारयेदृजु ॥ ७ ॥**
**मूलाग्रेऽङ्गुष्ठकोलास्थिप्रवेशं धूमनेत्रकम्।**

बस्तौ नेत्रं बस्तिनेत्रं, बस्तिनेत्रेण समं बस्तिनेत्रतुल्यं द्रव्यं धातुदार्वस्थिवेणुजं यस्य धूमनेत्रस्य तद्बस्तिनेत्रसमद्रव्यं धूमनेत्रं शिल्पिना कारयेद्भिषक्। किम्भूतं नेत्रम्? त्रयः कोशाः पर्वाणि यस्य तत्त्रिकोशम्। ऋजु न वक्रम्। तथा मूलं चाऽग्रं च तस्मिन्यथासङ्ख्यमङ्गुष्ठबदरास्थिप्रवेशम्। अङ्गुष्ठश्च कोलास्थि चेति 'समाहारद्वन्द्वः'। तत्प्रविशत्यस्मिन्निति 'पदरुजविशेति घञ्'।

दैर्घ्येण प्रमाणमिदानीं तीक्ष्णादिकत्रिविधधूमनेत्रस्याऽऽह—

**तीक्ष्णस्नेहनमध्येषु त्रीणि चत्वारि पञ्च च ॥ ८ ॥**
**अङ्गुलानां क्रमात्पातुः प्रमाणेनाऽष्टकानि तत्।**

यथासङ्ख्यं दैर्घ्येण तीक्ष्णस्य त्रीण्यष्टकानि चतुर्विंशतिरङ्गुलानि स्युः। स्नेहने च धूमे चत्वार्यष्टकानि द्वात्रिंशदङ्गुलानि स्युः। मध्यमे च धूमे पञ्चाष्टकानि चत्वारिंशदङ्गुलानि स्युः। पर्वानेकत्वं सूक्ष्मत्वं दैर्घ्यं च नेत्रस्येह कृतम्। एवं हि नयनकर्णादीनां न बाधको धूमः स्यात्। तथा च मुनिः—"दूराद्विनिर्गतः पर्वच्छिन्नो नाडीतनूकृतः। नेन्द्रियं बाधते धूम इति"।

कीदृशः सन् धूमं पिबेदित्याह—

**ऋजूपविष्टस्तच्चेता विवृतास्यस्त्रिपर्ययम् ॥ ९ ॥**
**पिधाय च्छिद्रमेकैकं धूमं नासिकया पिबेत्।**

ऋजु स्पष्टमुपविष्ट आसीनः। तथा तच्चेता धूमपानगतचित्तः। तथा प्रसारितमुखः। तथा नेत्रगतदृष्टिरित्यादि द्रष्टव्यम्। कथं पिबेत्? त्रिपर्ययमाक्षेपविसर्गावपनैस्त्रिपर्ययैः। तथा छिद्रमेकैकं पिधाय प्रकृतत्वान्नासिकाया एव। तदेवंविधः सन्नासिकया पिबेत्। 'एकैकमित्येकं बहुव्रीहिवदिति द्वित्वसुब्लोपौ'। तेनाऽयमर्थः—एकं नासापुटं पिधायाऽपरेण नासापुटेनाऽऽकृष्य धूमं पिबेत्। अपरं नासापुटं पिधाय तदपरेणाऽऽकृष्य तथैव पिबेदित्यर्थः।

**प्राक् पिबेन्नासयोत्क्लिष्टे दोषे घ्राणशिरोगते ॥ १० ॥**
**उत्क्लेशनार्थं वक्त्रेण विपरीतं तु कण्ठगे।**

नासागते शिरोगते वा दोष उत्क्लिष्टे स्वस्थानाच्चालिते सति प्राक् पूर्वं नासया पिबेत्। अनुत्क्लिष्टे दोष उत्क्लेशनार्थं वक्त्रेण प्राक् पिबेत् पश्चान्नासिकया।

कण्ठरोधदोषोत्क्लेशनार्थं प्राङ्नासिकया पिबेत् पश्चाद्वक्त्रेणेति विपरीतम्।

**मुखेनैव वमेद्धूमं नासया दृग्विघातकृत्॥ ११॥**

नासयाऽऽस्येन वा पीतं धूमं वक्त्रेणैवोत्सृजेत्। ननु घ्राणेनैव कस्मान्न मुच्येतेत्याह—नासयेत्यादि। घ्राणेनोत्सृज्यमानो धूमो दृष्टिविघाततिमिरादीन् करोति। तस्मान्मुखेनैवोत्सृजेत्।

**आक्षेपमोक्षैः पातव्यो धूमस्तु त्रिस्त्रिभिस्त्रिभिः।**

आक्षेपमोक्षैरादानविसर्गैस्त्रिभिस्त्रिभिस्त्रीन्वारान् धूमः पातव्यः। 'त्रिरिति द्वित्रिचतुर्भ्यः सुच्'।

**अह्नः पिबेत्सकृत् स्निग्धं द्विर्मध्यं शोधनं परम्॥ १२॥**
**त्रिश्चतुर्वा,**

अह्नः सकृदेकवारं स्निग्धं धूमं पिबेत्। मध्यमं धूमं द्वौ वारौ पिबेत्। अह्न इत्यत्राऽप्यनुवर्तते। तीक्ष्णं धूमं त्रीन् वारांश्चतुरो वा दिवसस्य पिबेत्। 'अह्न इति, कृत्वोऽर्थप्रयोगे कालेऽधिकरण इति षष्ठी'।

**मृदौ तत्र द्रव्याण्यगुरुगुग्लुः।**
**मुस्तस्थौणेयशैलेयनलदोशीरवालकम्॥ १३॥**
**वराङ्गकौन्तीमधुकबिल्वमज्जैलवालुकम्।**
**श्रीवेष्टकं सर्जरसो ध्यामकं मदनं प्लवम्॥ १४॥**
**शल्लकी कुङ्कुमं माषा यवाः कुन्दुरकं तिलाः।**
**स्नेहः फलानां साराणां मेदोमज्जावसाघृतम्॥ १५॥**

तत्र तेषु त्रिषु धूमेषु मध्यान्मृदौ प्रायोगिकाख्ये धूमे द्रव्याण्यगुरुप्रभृतीनि। प्लवो गोपालमदनकः। स्नेह इति—फलानामक्षोडनालिकेरादीनां स्नेहः, तथा साराणां खदिरासनादीनां च स्नेहः। मधुकमदनयोरेकयोनित्वादुक्तस्योपयोगो मदनस्याऽत्र विरुद्ध इति केचित्। तच्चाऽयुक्तम्। द्रव्यान्तरत्वान्मदनस्य पिण्याकादिवत्तिलादेः। घृतं चाऽत्र गव्यमेव ग्राह्यं मुख्यत्वात्। उक्तं हि—"गव्ये क्षीरघृते श्रेष्ठ इति"।

**शमने शल्लकी लाक्षा पृथ्वीका कमलोत्पलम्।**
**न्यग्रोधोदुम्बराश्वत्थप्लक्षरोध्रत्वचः सिता॥ १६॥**
**यष्टीमधुः सुवर्णत्वक् पद्मकं रक्तयष्टिका।**
**गन्धाश्चाऽकुष्ठतगराः,**

शमने धूमे शल्लक्यादीनि गन्धद्रव्याणि कुष्ठतगरवर्ज्यानि।

**तीक्ष्णे ज्योतिष्मती निशा॥ १७॥**





**दशमूलमनोह्वाऽऽलं[1] लाक्षाश्वेता[3]फलत्रयम्।**
**गन्धद्रव्याणि तीक्ष्णानि, गणो मूर्धविरेचनः॥ १८॥**

तीक्ष्णे विरेचनाख्ये धूमे ज्योतिष्मत्यादीनि, गन्धद्रव्याणि च तीक्ष्णानि कुष्ठ-तगरादीनि, गणश्च शोधनादिगणसङ्ग्रहोक्तो वेल्लापामार्गेत्यादिको मूर्धविरेचनः।

सम्प्रति धूमवर्तिविधानमाह--

**जले स्थितामहोरात्रमिषीकां द्वादशाङ्गुलाम्।**
**पिष्टैर्धूमौषधैरेवं पञ्चकृत्वः प्रलेपयेत्॥ १९॥**
**वर्तिरङ्गुष्ठवत्स्थूला यवमध्या यथा भवेत्।**
**छायाशुष्कां विगर्भां तां स्नेहाभ्यक्तां यथायथम्॥ २०॥**
**धूमनेत्रार्पितां पातुमग्निप्लुष्टां प्रयोजयेत्।**

रात्रिन्दिवं सलिले उषितां दैर्घ्येण द्वादशाङ्गुलामिषीकां दर्भमूलतृणं पञ्चकृत्वः पञ्चवारान् धूमोक्तैरौषधैः पिष्टैः प्रकर्षेण लेपयेत्। यथाऽङ्गुष्ठवत्स्थूला यवमध्या वर्तिः स्यात्। एतदाकृतिविधानं च त्रिविधेऽपि नेत्रके, वर्तेः सुखप्रवेशार्थम्। तामिषीकां छायाविशुष्कां विगतगर्भामपनीतेषीकां, तथा स्नेहेन घृतादिना यथास्वमभ्यक्तां, तथा धूमनेत्रस्य यदङ्गुष्ठप्रमाणं छिद्रं तत्राऽर्पितां, तथाऽग्निप्लुष्टामङ्गारप्रदीप्तां, पातुं पानार्थे प्रयोजयेत्।

अधुनाऽपरमपि धूमप्रकारमाह--

**शरावसम्पुटच्छिद्रे नाडीं न्यस्य दशाङ्गुलाम्॥ २१॥**
**अष्टाङ्गुलां वा वक्त्रेण कासवान् धूममापिबेत्।**

शरावयोः संपुटं युग्मं तस्य छिद्रे नाडीं दशाङ्गुलामष्टाङ्गुलप्रमाणां वा निक्षिप्य कासी धूममापिबेत्। तदयमत्राऽर्थः—'अपगतधूमखदिरबदरादिदारुस्थिराङ्गार-प्रखरपूर्णशरावे कासहरचूर्णं सस्नेहं गुलिकां वा न्यस्य मध्यकृतच्छिद्रशरावेण पिधाय नाडीमष्टाङ्गुलां दशाङ्गुलां वा निवेश्य कासवान् कासी वक्त्रेण मुखेन धूमं पिबेदिति।

**कासः श्वासः पीनसो विस्वरत्वं पूतिगन्धः पाण्डुता केशदोषः।**
**कर्णाऽऽस्याक्षिस्रावकण्ड्वर्तिजाड्यं तन्द्रा हिध्मा धूमपं न स्पृशन्ति २२**

कासादयो धूमपं न स्पृशन्ति। धूमं पातुरेते न सम्भवन्तीति भावः। तत्र पूतिगन्ध आस्यनासयोः। पाण्डुता मुखस्य। केशस्य दोषाः सितपिञ्जरत्वादयः। कर्णौ चाऽऽस्यं चाऽक्षिणी च कर्णाऽऽस्याक्षि। स्रावश्च कण्डूश्चाऽर्तिश्च जाड्यं च स्रावकण्ड्वर्तिजाड्यम्। कर्णादिषु प्रत्येकं स्रावादिचतुष्टयं योज्यमिति। 'शालिनी वृत्तम्'।

---

मौ० टि०—१ मनोह्वा=मनःशिला। २ आलं=हरितालम्। ३ श्वेता=काष्ठपाटला पाटलाभेद इत्यर्थः।



इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामेकविंशतितमोऽध्यायः ॥ २१ ॥

# द्वाविंशतितमोऽध्यायः।

इदानीं द्वाविंशाध्यायारम्भणप्रस्तावो गण्डूषादिविधानप्रदर्शनार्थमित्याह—

**अथाऽतो गण्डूषादिविधिमध्यायं व्याख्यास्यामः।**

गण्डूषादयो विधीयन्ते यस्मिन्निति गण्डूषादिविधिः । आदिशब्देन कवलादिपरिग्रहः।

**चतुष्प्रकारो गण्डूषः स्निग्धः शमनशोधनौ।**
**रोपणश्च,**

चत्वारः प्रकारा भेदा यस्य स चतुष्प्रकारो गण्डूषः स्निग्धादिभेदेन ।

**त्रयस्तत्र त्रिषु योज्याश्चलादिषु ॥ १ ॥**
**अन्त्यो व्रणघ्नः,**

तत्र तेषु गण्डूषेषु मध्याद्यथासङ्ख्यं पवनपित्तश्लेष्मसु त्रयः स्निग्धादयो गण्डूषा योज्याः। तत्र वाते स्निग्धो गण्डूषः। पित्ते शमनः । कफे शोधन इत्यर्थः। अन्त्यो रोपणाख्यो व्रणघ्नो व्रणसाधन उपयुज्यते।

इदानीमेषां लक्षणं निर्वक्ति—

**स्निग्धोऽत्र स्वाद्वम्लपटुसाधितैः।**
**स्नेहैः,**

अत्रैषु गण्डूषेषु मध्ये स्निग्धो मधुरादिसाधितैः स्नेहैर्भवति।

**संशमनस्तिक्तकषायमधुरौषधैः ॥ २ ॥**

शमनस्तिक्तादिभिरौषधैः पटोलाऽरिष्टजम्ब्वाम्रमधुकक्वाथशर्करोदकक्षौद्रादिभिः स्यात्।

**शोधनस्तिक्तकट्वम्लपटूष्णैः**

शोधनो गण्डूषस्तिक्तकट्वम्लादिभिरौषधैर्भवति।

**रोपणः पुनः।**
**कषायतिक्तकैः,**

रोपणस्तु गण्डूषः कषायतिक्तकैः स्यात्।

ननु द्रव्याणां शुष्कत्वाद्गण्डूषानुपपत्तिरिति चेत्तत्राह—

**तत्र स्नेहः क्षीरं मधूदकम् ॥ ३ ॥**
**शुक्तं मद्यं रसो मूत्रं धान्याम्लं च यथायथम्।**
**कल्कैर्युक्तं विपक्वं वा यथास्पर्शं प्रयोजयेत् ॥ ४ ॥**



तत्र तेषु पूर्वोक्तेषु गण्डूषेषु मध्ये स्नेहादिकं कल्कैर्यथायथं युक्तं विपक्वं वा यथास्पर्शं शीतमुष्णं वा प्रयोजयेत्।

**दन्तहर्षे दन्तचाले मुखरोगे च वातिके।**
**सुखोष्णमथवा शीतं तिलकल्कोदकं हितम्॥ ५॥**

दन्तहर्षादौ कवोष्णमथवा शीतं दोषवशात् तिलकल्कोदकं हितम्।

**गण्डूषधारणे नित्यं तैलं मांसरसोऽथवा।**

गण्डूषधारणे नित्यं तैलं मांसरसो वा हितः।

**ऊषादाहान्विते पाके क्षते वाऽऽगन्तुसम्भवे॥ ६॥**
**विषक्षाराऽग्निदग्धे च सर्पिर्धार्यं पयोऽथवा।**

ऊषादियुक्ते पाके क्षते वाऽऽगन्तुजे तथा विषे क्षाराग्निभ्यां दग्धे च सर्पिर्गण्डूषे हितं क्षीरं वा।

**वैशद्यं जनयत्यास्ये सन्दधाति मुखव्रणान्॥ ७॥**
**दाहतृष्णाप्रशमनं मधुगण्डूषधारणम्।**

माक्षिकगण्डूषधारणं मुखे वैशद्यं जनयति न पैच्छिल्यम्। मुखव्रणांश्च सन्दधाति तथा दाहं तृष्णां च शमयति।

**धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम्॥ ८॥**

धान्याम्लं गण्डूष उपयुक्तं वदनवैरस्यं तथा मलं दौर्गन्ध्यं चाऽपनयति।

**तदेवाऽलवणं शीतं मुखशोषहरं परम्।**

तदेव काञ्जिकमलवणं शीतं परमतिशयेनाऽऽस्यशोषहरम्।

**आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम्॥ ९॥**

क्षारेण स्वर्जिकादिना युक्तं जलं कफस्य चयमाशु भिनत्ति।

**सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम्।**

कोष्णपानीयगण्डूषैर्वदनलाघवं सम्पद्यते।

**निवाते सातपे स्विन्नमृदितस्कन्धकन्धरः॥ १०॥**
**गण्डूषमपिबन् किञ्चिदुन्नतास्यो विधारयेत्।**

वातरहिते रव्यालोके स्थाने। स्कन्धौ च कन्धरा च स्कन्धकन्धरम्। पूर्वं स्विन्नं पश्चान्मृदितं स्कन्धकन्धरं यस्य स एवम्। तथा गण्डूषमपिबंस्तथा किञ्चिदुन्नतं मुखं यस्य स एवंविधः सन् गण्डूषं धारयेत्।

कियन्तं कालमित्याह—

**कफपूर्णास्यता यावत्स्रवद्घ्राणाक्षताऽथवा।**
**असञ्चार्यो मुखे पूर्णे गण्डूषः, 'कवलो'ऽन्यथा॥ ११॥**

कफेन पूर्णं कफपूर्णमास्यं यस्य स कफपूर्णास्यस्तस्य भावः कफपूर्णास्यता यावद्भवेत्। अथवा स्रवद् घ्राणाक्षि यस्य स स्रवद्घ्राणाक्षः। 'बहुव्रीहौ सक्थ्यक्ष्णो-

रिति षच्' । तस्य भावः स्रवद्घ्राणाघ्नता यावत्स्यात्तावद्गण्डूषान् धारयेत् । एवं गण्डूशः पञ्च सप्त धारयितव्या यावत्स्वास्थ्यं स्यात् । मुखे पूर्णे सति यः सञ्चारयितुमशक्यः स्यात् स गण्डूष उच्यते । अन्यथा च यः सञ्चारयितुं शक्यते मुखेऽपूर्णे स कवल उच्यते ।

**मन्याशिरःकर्णमुखाक्षिरोगाः प्रसेककण्ठामयवक्त्रशोषाः ।**
**हृल्लासतन्द्रारुचिपीनसाश्च साध्या विशेषात्कवलग्रहेण ॥ १२ ॥**

मन्यादीनां रोगेण सम्बन्धः । ' प्रसेकादीनां द्वन्द्वः ' । आमयशब्दस्य कण्ठेन सम्बन्धो विविधकण्ठरोगसूचनार्थः । मन्यारोगादयो विशेषेण कवलधारणेन साध्याश्चिकित्स्याः ।

**कल्को रसक्रिया चूर्णस्त्रिविधं प्रतिसारणम् ।**

कल्कादिभेदेन प्रतिसारणं त्रिधा स्यात् । कल्को जलादिपिष्टः । माक्षिकादिना यद् द्रवीक्रियते द्रव्यं सा रसक्रिया । चूर्णं प्रथितमेव ।

**युञ्ज्यात्तत् कफरोगेषु गण्डूषविहितौषधैः ॥ १३ ॥**

तत्प्रतिसारणं श्लेष्मरोगेषु गण्डूषोक्तैरौषधैर्योज्यम् । सामान्योक्तावपि कफरोगविषयत्वात् शोधनगण्डूषोक्तैरिति वेद्यम् ।

**मुखालेपस्त्रिधा दोषविषहा वर्णकृच्च सः ।**

मुखालेपस्त्रिप्रकारो दोषघ्नो विषघ्नो वर्णकरश्च ।

**उष्णो वातकफे शस्तः शेषेष्वत्यर्थशीतलः ॥ १४ ॥**

स च मुखालेपो वातश्लेष्मणयुष्णो हितः । शेषेषु पित्ते वातपित्ते विषे च शिशिरो हितः । स च त्रिप्रमाणः ।

कथमित्याह—

**त्रिप्रमाणश्चतुर्भागत्रिभागार्धाङ्गुलोन्नतिः ।**

चतुर्भागत्रिभागार्धाङ्गुलोन्नतिः । उन्नतिरुत्सेधः ।

**अशुष्कस्य स्थितिस्तस्य शुष्को दूषयति च्छविम् ॥ १५ ॥**
**तमार्द्रयित्वाऽपनयेत्तदन्तेऽभ्यङ्गमाचरेत् ।**

तस्य मुखालेपस्याऽशुष्कस्य स्थितिः । शुष्कस्तु मुखालेपश्छविं त्वचं दूषयति । मुखालेपमार्द्रयित्वाऽपसारयेत् । तस्यान्ते तस्मिन्नपनीतेऽभ्यङ्गं कुर्यात् ।

**विवर्जयेद्दिवास्वप्नभाष्याऽग्न्यातपशुक्क्रुधः ॥ १६ ॥**

मुखालेपी दिवास्वप्नादीन् वर्जयेत् । अहःस्वप्नादिसेवनात् कण्डूत्वक्शोफपीनसदृष्ट्युपघातादिभयं स्यात् ।

**न योग्यः पीनसेऽजीर्णे दत्तनस्ये हनुग्रहे ।**
**अरोचके जागरिते,**

पीनसादौ मुखालेपो न योज्यः ।



स च हन्ति सुयोजितः ॥ १७ ॥
अकालपलितव्यङ्गवलीतिमिरनीलिकाः ।

स च मुखालेपः सुयोजितो विधिना सेवितोऽकालपलितादीन् पराकरोति ।

कोलमज्जा वृषान्मूलं शाबरं गौरसर्षपाः ॥ १८ ॥
सिंहीमूलं तिलाः कृष्णा दार्वीत्वङ्निस्तुषा यवाः ।
दर्भमूलहिमोशीरशिरीषमिशितण्डुलाः ॥ १९ ॥
कुमुदोत्पलकह्लारदूर्वामधुकचन्दनम् ।
कालीयकतिलोशीरमांसीतगरपद्मकम् ॥ २० ॥
तालीसगुन्द्रापुण्ड्राह्वयष्टीकाशनतागुरुः ।
इत्यर्धार्धोदिता लेपा हेमन्तादिषु षट् स्मृताः ॥ २१ ॥

कोलमज्जादयोऽर्धश्लोकोक्ताः षण्मुखालेपा इत्येवं षट्सु हेमन्तादिषु ऋतुषु स्मृताः । मुनीन्द्रैरिति शेषः । तत्र बदरमज्जादयो हेमन्ते । व्याघ्र्यादयः शिशिरे । दर्भमूलादयो वसन्ते । कुमुदादयो ग्रीष्मे । कालीयकादयः प्रावृषि । तालीसादयः शरदि ।

मुखालेपनशीलानां दृढं भवति दर्शनम् ।
वदनं चाऽपरिम्लानं श्लक्ष्णं तामरसोपमम् ॥ २२ ॥

मुखालेपाभ्यासवतां नराणां दर्शनं दृष्टिर्दृढं स्यात् । मुखं च विकसितमिव तथा कोमलं पद्मतुल्यं च जायते ।

अभ्यङ्गसेकपिचवो बस्तिश्चेति चतुर्विधम् ।
मूर्धतैलम्,

अभ्यङ्गादिभेदात् चतुर्धा शिरसि तैलं स्यात् ।

बहुगुणं तद्विद्यादुत्तरोत्तरम् ॥ २३ ॥

तच्चोत्तरोत्तरं बहुगुणं विद्यात् । अभ्यङ्गात् सेको बहुगुणस्ततोऽपि पिचुस्तस्मादपि बस्तिरिति क्रमेण ।

तत्राऽभ्यङ्गः प्रयोक्तव्यो रौक्ष्यकण्डूमलादिषु ।

तत्र तेषु मध्ये रौक्ष्यादिष्वभ्यङ्गः कार्यः ।

अरूंषिकाशिरस्तोददाहपाकव्रणेषु तु ॥ २४ ॥
परिषेकः,

अरूंषिकादिषु परिषेकः ।

पिचुः केशशातस्फुटनधूपने ।
नेत्रस्तम्भे च,

केशशातादिषु पिचुः प्रयोक्तव्यः ।

बस्तिस्तु प्रसुप्त्यर्दितजागरे ॥ २५ ॥



**मासाऽऽस्यशोषे तिमिरे शिरोरोगे च दारुणे।**

बस्तिः पुनः प्रसुप्त्यादौ योज्यः।

**विधिस्तस्य निषण्णस्य पीठे जानुसमे मृदौ॥ २६॥**
**शुद्धाक्तस्विन्नदेहस्य दिनान्ते गव्यमाहिषम्।**
**द्वादशाङ्गुलविस्तीर्णं चर्मपट्टं शिरःसमम्॥ २७॥**
**आकर्णबन्धनस्थाने ललाटे वस्त्रवेष्टिते।**
**चैलवेणिकया बध्वा माषकल्केन लेपयेत्॥ २८॥**

तस्य शिरोबस्तेर्विधानमुच्यते। निषण्णस्योपविष्टस्य नरस्य॰। क? पीठे जानुतुल्ये तथा मृदौ न कठिने। किम्भूतस्य? शुद्धो वमनादिनाऽऽक्तस्तैलादिना स्विन्नः स्वेदेन देहो यस्य तस्य शुद्धाक्तस्विन्नदेहस्य। कदा? दिनान्तेऽपराह्णे विभावर्यां वा। चर्मपट्टं गव्यं माहिषं वा तथा द्वादशाङ्गुलविस्तीर्णं तथा शिरस्तुल्यं तथाऽऽकर्णं कर्णं यावद्बन्धनस्थानं यस्य तदेवंविधं चर्मपट्टं चैलवेणिकया संयम्य माषकल्केन लेपयेत्। कथं? ललाटे वस्त्रवेष्टिते। सङ्ग्रहे तूक्तम्—"अथ शुद्धतनोः सायं रात्रौ वा निवातस्थस्य स्वभ्यक्तस्विन्नस्य सोपाश्रयासनोपविष्टस्य केशान्ते श्लक्ष्णं त्र्यङ्गुलं माषपिष्टेन सूक्ष्मेण सद्यः सुखाम्बुना मृदितेनोभयतः प्रदिग्धं वस्त्रपट्टं बध्नीयात्। ततस्तस्योपरि सन्धाय बस्तिं बस्तिमूलं च दृढमवलीकं समं चैलवेणिकया बध्वा पुनर्माषपिष्टेनापरिस्रावि कृत्वा यथाव्याधिदोषदूष्यहितं सिद्धमन्यतमं स्नेहं सुखोष्णमासेचयेदिति।

**ततो यथाव्याधि शृतं स्नेहं कोष्णं निषेचयेत्।**
**ऊर्ध्वं केशभुवो यावद् द्व्यङ्गुलम्,**

तत एवं कृते सति व्याधिवशेन पक्वं स्नेहं कोष्णमपरिच्छिद्रेणाऽवसेचयेत्। केशभूमेरुपरिष्टाद् द्व्यङ्गुलं यावत्।

स च स्नेहः कियत्कालं धार्य इत्याह—

**धारयेच्च तम्॥ २९॥**
**आवक्त्रनासिकोत्क्लेदात्,**

तं च स्नेहं यावद्वक्त्रनासिकास्रुतिः स्यात्तावद्धारयेत्।

**दशाऽष्टौ षट् चलादिषु।**
**मात्रासहस्राणि,**

चल आदिर्येषां ते चलादयस्तेषु यथासङ्ख्यं दशाष्टौ षड् मात्रासहस्राणि यावत्स्नेहं धारयेत्। वाते दशमात्रासहस्राणि, पित्तेऽष्टौ मात्रासहस्राणि, कफे षण्मात्रासहस्राणीत्यर्थः।

**अरुजे त्वेकम्,**

अरुजे तु स्वस्थवृत्ते, एकमात्रासहस्रं धारयेत्।



**स्कन्धादि मर्दयेत् ॥ ३० ॥**

**मुक्तस्नेहस्य,**

मुक्तस्नेहस्याऽपनीतशिरोबस्तेः स्कन्धशिरोग्रीवादि मर्दयेत्। स्नेहबस्तिर्हि स्नेहशब्देनाऽत्र गृह्यते। तत उष्णोदकोपचारी स्यादित्यादिकमाचरेत्। तत्र ह्यवोचत्—'सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रम इति'।

**परमं सप्ताहं तस्य सेवनम्।**

तस्य च स्नेहबस्तेः परमं सेवनं सप्तदिनानि। तस्मात्त्रिपञ्चसप्त वाऽहानि कार्यः शिरोबस्तिरित्यवतिष्ठते।

**धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयन् ॥ ३१ ॥**
**रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने।**

कर्णपूरणं धारयेत्। किं कुर्वन्? कर्णमूलं विमर्दयन्। कियत्कालं यावत्पीडाया मार्दवं भवेत्। स्वस्थचित्ते तु मात्राशतं यावद्बिभृयात्।

अथ मात्रायाः किं प्रमाणमित्याह—

**यावत्पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ॥ ३२ ॥**
**निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता।**

दक्षिणं हस्ताग्रं कर्तृ जानुमण्डलं दक्षिणं पर्येति परिवर्तते। दक्षिणशब्दोऽत्र 'काकाक्षिगोलकन्यायेन' द्वयेनाऽपि युज्यते। कियत्कालेनेत्याह। निमेषोन्मेषकालेन समं, न तु विश्रम्य, सा मात्रा स्मृता मुनिभिरिति शेषः।

**कचसदनसितत्वपिञ्जरत्वं परिस्फुटनं शिरसः समीररोगान्।**
**जयति, जनयतीन्द्रियप्रसादं स्वरहनुमूर्धबलं च मूर्धतैलम् ॥ ३३ ॥**

कचानां सदनादिभिः सम्बन्धः। परिस्फुटनं कचानामेव प्रकृतत्वात्। शिरसो मरुदामयांश्च हन्ति। इन्द्रियाणां चक्षुरादीनां प्रसादं जनयति। तथा स्वरादिबलं च मूर्धतैलं जनयति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां द्वाविंशतितमोऽध्यायः ॥ २२ ॥

# त्रयोविंशोऽध्यायः।

त्रयोविंशाध्यायारम्भे जत्रूर्ध्वरोगप्रस्तावाल्लोचने, आश्च्योतनविधानप्रदर्शनार्थमित्याह—

**अथाऽत आश्च्योतनाञ्जनविधिमध्यायं**
**व्याख्यास्यामः।**

आश्च्योतनं चाऽञ्जनं च तयोर्विधिर्यस्मिन्नध्याये स एवम्। शेषं पूर्ववत्।

**सर्वेषामक्षिरोगाणामादावाश्च्योतनं हितम्।**

**रुक्तोदकण्डूघर्षाश्रुदाहरागनिबर्हणम् ॥ १ ॥**

सकलानामपि नयनामयानां प्रथममाश्चोतनं परिषेको हितम् । यतस्तदाश्चोतनमुपयुक्तं रुजादिघ्नं स्यात् । सङ्ग्रहे चोक्तम्—"अव्यक्तेष्वेवंगुणमेव पक्ष्मपरिहारेणाऽक्षिकोशालेपनं तच्च बिडालकसंज्ञकमिति"

**उष्णं वाते कफे कोष्णं तच्छीतं रक्तपित्तयोः ।**

तदाश्चोतनं मरुत्युष्णम् । कफे किञ्चिदुष्णम् । रक्ते पित्ते च शीतं हितम् । सम्प्रत्याश्चोतनस्य विधिमाह —

**निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम् ॥ २ ॥**
**शुक्त्या प्रलम्बयाऽन्येन पिचुवर्त्या कनीनिके ।**
**दश द्वादश वा बिन्दून् द्व्यङ्गुलादवसेचयेत् ॥ ३ ॥**
**ततः प्रमृज्य मृदुना चैलेन कफवातयोः ।**
**अन्येन कोष्णपानीयप्लुतेन स्वेदयेन्मृदु ॥ ४ ॥**

निवातस्थानस्थितस्याऽतुरस्य वैद्यो वामेन पाणिनोन्मील्य लोचनमपाङ्गदेशे भाजनं निधायाऽन्येन दक्षिणकरेण पिचुवर्त्या शुक्त्या प्रलम्बया दश द्वादश वा बिन्दून् द्व्यङ्गुलान्नातिनिकटान्नातिदूरात् कनीनिकेऽवसेचयेत् । तत इति–अनन्तरं कोमलेन वस्त्रखण्डेन प्रमृज्य शोधयित्वाऽन्येन शोधनाच्चैलेन कोष्णजलप्लुतेनाऽक्षि मृदु स्वेदयेन्नातिशयेन । कयोर्दोषयोः ? वातकफयोः । नतु पित्तरक्तयोरित्यर्थः ।

**अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाऽक्षिसेचनम् ।**
**अतिशीतं तु कुरुते निस्तोदस्तम्भवेदनाः ॥ ५ ॥**
**कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु ।**
**विकारवृद्धिमत्यल्पं संरम्भमपरिस्रुतम् ॥ ६ ॥**

अत्यर्थमुष्णमतितीक्ष्णं चाऽऽश्चोतनं, रुजे रागाय, दृग्विनाशाय च स्यात् । अतिशीतं त्वक्षिसेचनं निस्तोदादीन् विधत्ते । निस्तोदः सूच्येव व्यधः । स्तम्भोऽक्ष्णः स्तम्भनमिव । वेदना शूलम् । कषायवर्त्मत्वं कुरुते । घर्षो वर्त्मनः परस्परं संश्लेषः । बहुतिमात्रमाश्चोतनं कृच्छ्रेणोन्मेषणं विधत्ते । अत्यल्पमक्षिसेचनं विकारवृद्धिं कुरुते । अपरिस्रुतमक्षिसेचनं संरम्भं नेत्रक्षोभं विधत्ते ।

कया रीत्या नेत्रे प्रयुक्तमौषधं दोषानपनयतीत्याह—

**गत्वा सन्धिशिरोघ्राणमुखस्रोतांसि भेषजम् ।**
**उर्ध्वगान्नयने न्यस्तमपवर्तयते मलान् ॥ ७ ॥**

सन्ध्यादीनां द्वन्द्वः । 'ततः स्रोतःशब्देन षष्ठीसमासः' । सन्धिशब्देनेहाक्षिकोशसम्बन्धिनः सन्धयो गृह्यन्ते । तेनाक्षिकोशसम्बन्धिस्रोतांसि शिरोघ्राणमुखस्रोतांसि गत्वा नयने क्षिप्तमौषधमूर्ध्वगान्मलानपवर्तयते ।





**अथाऽञ्जनं शुद्धतनोर्नेत्रमात्राश्रये मले।**
**पक्वलिङ्गेऽल्पशोफातिकण्डुपैच्छिल्यलक्षिते॥ ८॥**
**मन्दघर्षाऽश्रुरागेऽक्षिण प्रयोज्यं घनदूषिके।**
**आर्ते पित्तकफासृग्भिर्मारुतेन विशेषतः॥ ९॥**

अथाश्चोतनादन्यदञ्जनं प्रयोक्तव्यम्। कीदृशस्याऽऽतुरस्य ? शुद्धा तनुर्यस्य सः, तस्य। मले नेत्रमात्राश्रये, न त्वधिकशरीरव्यापिनि। तथा पक्वलिङ्गे। पक्वलिङ्गता कथं वेद्येति ? विशेषणद्वारेणाऽऽह अल्पशोफेनातिकण्ड्वा, पैच्छिल्येन च लक्षितेऽवगते पक्वलिङ्गे सति। कीदृशेऽक्षिण ? मन्दा अल्पा घर्षा अश्रुरागा यस्य तस्मिन्। तथा घना दूषिका नेत्रमलो यस्मिन्नयने तस्मिन्। एतदपि पक्वलिङ्गमेव। पित्तेन कफेन रक्तेन चाऽऽतुरे। मारुतेन चाऽऽतुरे विशेषेणाञ्जनं प्रयोज्यम्।

**लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा।**
**अञ्जनम्,**

अञ्जनं च लेखनादिभेदेन त्रिभेदम्। लिख्यते शस्त्रेणेव शुक्रार्मादीति लेखनम्। रोप्यते संरोह्यतेऽनेनाऽभिष्यन्दादीति रोपणम्। प्रसाद्यते निर्मलीक्रियतेऽनेनेति प्रसादनम्। दृष्टेः प्रसादनं दृष्टिप्रसादनम्। सङ्ग्रहोक्तस्य स्नेहनस्याञ्जनस्य रोपणदृष्टिप्रसादनयोरेवान्तर्भूतत्वात्, तदिह पृथङ्नोक्तम्।

**लेखनं तत्र कषायाम्लपटूषणैः॥ १०॥**

तत्र तेषु त्रिष्वञ्जनेषु मध्याल्लेखनमञ्जनं कषायादिभिर्द्रव्यैः शुक्रार्मादिषु प्रयोज्यम्।

**रोपणं तिक्तकैर्द्रव्यैः,**

रोपणमञ्जनं तिक्तकैर्द्रव्यैः स्यात्। तिक्तग्रहणमुपलक्षणार्थं सङ्ग्रहोक्तस्य। तेन कषायद्रव्यैः संस्नेहै रोपणमञ्जनं वेद्यम्।

**स्वादुशीतैः प्रसादनम्।**

स्वादुशीतैर्द्रव्यैः प्रसादनमेव प्रसादनमञ्जनम्। स्वादुशीतद्रव्यैश्चूर्णं श्लक्ष्णाञ्जनं सन्तप्ते चक्षुषि प्रयुज्यमानं प्रत्यञ्जनसंज्ञां लभते।

**दशाङ्गुला तनुर्मध्ये शलाका मुकुलानना॥ ११॥**
**प्रशस्ता लेखने ताम्री रोपणे काललोहजा।**
**अङ्गुली च सुवर्णोत्था रूप्यजा च प्रसादने॥ १२॥**

दशाङ्गुला राजमाषस्थूला शलाका प्रशस्यते। मध्ये तनुस्तथा मुकुलाकारे आनने मुखे द्वे अपि यस्याः सा मुकुलानना। लेखनेऽञ्जने ताम्री शलाका प्रशस्यते। रोपणे काललोहोत्था कृष्णशस्त्रोद्भवा। अङ्गुली च हस्तावयवविशेषो रोपण एव शस्तः। एवं प्रसादनेऽञ्जने सुवर्णोत्था कनकोद्भवा रजतोद्भवा च शलाका प्रशस्ता।

अञ्जनकल्पना त्रिप्रकारा स्यात् कथमित्याह —

**पिण्डो रसक्रिया चूर्णस्त्रिधैवाऽञ्जनकल्पना।**
**गुरौ मध्ये लघौ दोषे ताः क्रमेण प्रयोजयेत्॥ १३॥**

पिण्डादिभेदेन त्रिप्रकाराऽञ्जनकल्पना स्यात्। पिण्डादयो बहुदोषादिषु क्रमेण प्रयोज्याः। गुरौ दोषे पिण्डः प्रयोज्यो, मध्ये दोषे रसक्रिया, लघुदोषे चूर्ण इत्यर्थः।

**हरेणुमात्रं पिण्डस्य वेल्लमात्रा रसक्रिया।**
**तीक्ष्णस्य द्विगुणं तस्य मृदुनः,**

तीक्ष्णद्रव्यकृतस्य पिण्डस्य हरेणुमात्रं प्रमाणं कथयन्ति। मृदुद्रव्यकृतस्य पिण्डस्य तद्द्विगुणं द्विहरेणुमात्रं वदन्ति। रसक्रियाया विडङ्गं प्रमाणमाहुः।

**चूर्णितस्य च॥ १४॥**
**द्वे शलाके तु तीक्ष्णस्य तिस्रः स्युरितरस्य च।**

चूर्णे तीक्ष्णे द्विगुणां शलाकां मृदौ त्रिगुणां शलाकामभिदधुः। तन्त्रान्तरे चोक्तम्—"लेखनमञ्जनं ताम्ररजतकांस्याद्यन्यतमेषु धार्यम्। रोपणं सुवर्णवटशङ्खान्यतमेषु। प्रसादनं स्फटिकप्लक्षचन्दनान्यतमेषु धार्यम्। एवं ह्यञ्जनमव्यापन्नगुणं भवति। वर्तिघर्षणार्थं शिला निम्नमध्याऽनुद्वारिणी पञ्चाङ्गुलायता त्र्यङ्गुलविस्तारेति"।

**निशि स्वप्ने न मध्याह्ने म्लाने नोष्णगभस्तिभिः॥ १५॥**
**अक्षिरोगाय दोषाः स्युर्वर्धितोत्पीडितद्रुताः।**
**प्रातःसायं च तच्छान्त्यै व्यभ्रेऽर्केऽतोऽञ्जयेत्सदा॥ १६॥**

निशि रात्रावञ्जनं न प्रयोजनीयम्। तथा स्वप्ने स्वप्नकालेऽञ्जनं न प्रयोज्यम्। तथा मध्यदिनेऽञ्जनं न प्रयोज्यम्। न च म्लाने लोचनेऽञ्जनं प्रयोज्यम्। केन म्लाने? उष्णाभिर्दीधितिभिः। तस्मादेषु कालेष्वञ्जनेन प्रयुक्तेन दोषा वृद्धिं नीतास्तथाऽन्यस्थानगतत्वादुत्पीडितास्तथा द्रुताः कालस्योष्णत्वाद्विलयं गता अक्षिरोगाय स्युस्तस्मादेषु कालेष्वञ्जनं न प्रयोज्यम्। यतः पूर्वोक्तेषु कालेषु पूर्वोक्ता दोषास्तस्मात्पूर्वाह्णे अपराह्णे च तच्छान्त्यै तस्याक्षिरोगस्योपशमाय गताभ्रे रवौ सदैव नेत्रमञ्जयेत्।

**वदन्त्यन्ये तु न दिवा प्रयोज्यं तीक्ष्णमञ्जनम्।**
**विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति॥ १७॥**

अन्ये त्वाचार्या एवं मन्यन्ते—तीक्ष्णमञ्जनं दिवा न प्रयोज्यम्। कस्मादित्याह। यस्माच्चक्षुरादित्यं प्राप्य सीदति। किम्भूतम्? विरेकदुर्बलम्। तीक्ष्णाञ्जनेन विरेचितत्वात्। तस्माद्दिवसे तीक्ष्णमञ्जनं न प्रयोज्यम्।

अत एवाऽऽह—

**स्वप्नेन रात्रौ कालस्य सौम्यत्वेन च तर्पिता।**



**शीतसात्म्या दृगाग्नेयी स्थिरतां लभते पुनः ॥ १८ ॥**

यस्मात्स्वप्नेन रात्रौ तर्पिता, तथा कालस्य रात्र्याख्यस्य सौम्यत्वेन तर्पिता दृष्टिः पुनः स्थैर्यं प्राप्नोति तीक्ष्णाञ्जनक्षोभिताऽपि। कीदृग्दृष्टिः ? आग्नेयी अग्न्युत्कटभूतसम्भवा। तथा शीतसात्म्या। तस्माद्रात्रावञ्जनं प्रयोज्यम्। 'आग्नेयीति सर्वत्राभिकलिभ्यां ढक्वक्तव्य इति ढक्'। शीतं सात्म्यं यस्याः। पैत्तिकज्वरस्येव।

तदेतदन्यमतमव्यापकमिति दूषयन्नाह—

**अत्युद्रिक्ते बलासे तु लेखनीयेऽथवा गदे।**
**काममह्न्यपि नात्युष्णे तीक्ष्णमक्ष्णि प्रयोजयेत् ॥ १९ ॥**

अत्युत्कृष्टे कफेऽथवा लेखनार्हे शुक्रार्मादौ रोगे दिनेऽपि नात्युष्णे तीक्ष्णमञ्जनं प्रयोजयेत्। काममनुगतमेतत्। कालस्यात्यौष्ण्यादञ्जनस्य तैक्ष्ण्याच्चाऽतियोगेन दृष्ट्युपघातः स्यात्।

अत एवाह—

**अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता।**
**उपघातोऽपि तेनैव तथा नेत्रस्य तेजसः ॥ २० ॥**

पाषाणाच्छस्त्रस्योत्पत्तिस्तस्मादेव चाऽश्मनः श्लक्ष्णतादियोगात्तीक्ष्णता। उपघातोऽपि कुण्ठत्वादिकस्तेनैव पाषाणेन न केवलं तैक्ष्ण्यम्। तथा 'तेनैवाश्मशस्त्रन्यायेन' नेत्रस्य तेजसोऽग्नेरश्मस्थानीयाज्जन्म रविसंज्ञात्तेजसः सकाशात्तीक्ष्णता दर्शनपटुत्वमत्युष्णेन तु तेन तस्योपघातः। तस्माद्यदन्ये गदन्ति सामान्येनैव दिवाऽञ्जनं न प्रयोज्यमिति तदसदेव।

**न रात्रावपि शीतेऽति नेत्रे तीक्ष्णाञ्जनं हितम्।**
**दोषमस्रावयत्स्तम्भकण्डूजाड्यादिकारि तत् ॥ २१ ॥**

अपि च रात्रावपि नेत्रे कफाधिक्येनातिशीते कण्डूपैच्छिल्याद्यनुमिते तीक्ष्णमञ्जनं न प्रयोज्यम्। यतो निशि तीक्ष्णमञ्जनमुपयुक्तं कालस्य सौम्यत्वाद्दोषस्रवणेऽयोग्यमस्रावयदञ्जनं कण्डूजाड्यादिकृत् स्यान्न तु शमकारि। तस्माच्छीतसात्म्या दृगाग्नेयी स्थिरतां लभते पुनरित्येतदप्यसत्। तस्मात्पूर्वोक्तमेवाऽनवद्यम्।

**नाञ्जयेद्भीतवमितविरिक्ताऽशितवेगिते।**
**क्रुद्धज्वरिततान्ताक्षिशिरोरुक्शोकजागरे ॥ २२ ॥**
**अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः।**
**अजीर्णेऽग्न्यर्कसंतप्ते दिवा सुप्ते पिपासिते ॥ २३ ॥**

भीतादीनामक्षिणी वैद्यो नाञ्जयेत्। अशितोऽत्र सद्योभुक्तो वेद्यः। सद्योभुक्तस्य नरस्य नयने नाञ्जयेदित्यर्थः। तान्ते सूक्ष्मभासुरादिदर्शनादभिघातत्वाच्च ग्लाने अक्षिणी यस्य स एवं तस्मिन्। अदृष्टेऽर्के जलदच्छन्नत्वात्। तथा शिरःस्नातादिषु।

साम्प्रतं यादृशमञ्जनं न योज्यं तद्दर्शयति—

**अतितीक्ष्णमृदुस्तोकबह्वच्छघनकर्कशम् ।**
**अत्यर्थशीतलं तप्तमञ्जनं नावचारयेत् ॥ २४ ॥**

अतिशब्दस्य तीक्ष्णादिभिर्घनान्तैः सम्बन्धः । अत्यर्थशीतलमित्येतस्मादत्यर्थ-शब्दस्तप्तमित्यत्राऽनुवृत्तिकृतेन सम्बन्धेन योज्यः । अतितीक्ष्णादिगुणमञ्जनं न प्रयोजयेत् । तन्त्रान्तरे चाऽञ्जनविधिरुक्तः—"सुखोपविष्टस्याऽऽतुरस्य सूपविष्टो वैद्यो वामाङ्गुष्ठेनोत्तरं वर्त्माऽऽक्षिप्य कृष्णभागस्याऽधः कनीनिकादपाङ्गं यावदञ्जनं नयेदिति" ।

**अथाऽनुन्मीलयन् दृष्टिमन्तः सञ्चारयेच्छनैः ।**
**अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम् ॥ २५ ॥**
**तीक्ष्णं व्याप्नोति सहसा न चोन्मेषनिमेषणम् ।**
**निष्पीडनं च वर्त्मभ्यां क्षालनं वा समाचरेत् ॥ २६ ॥**

अक्ष्णैवमञ्जनस्वरूपमवेत्य नेत्रेऽञ्जिते सति दृष्टिगोलकमनुन्मीलयन्मध्ये शनैः-शनैः सञ्चारयेत् । कथम् ? वर्त्मनी चालयेत् । एवमञ्जनं नेत्रं व्याप्नोत्यनुप्रविशति । न च सहसा विध्यति क्रमेणोन्मेषणं कुर्यात् । च शब्दोऽवधारणे । नैव समाचरे-दित्यर्थः । वर्त्मभ्यां च निष्पीडनं न समाचरेत् । वाशब्दोऽवधारणे । क्षालनं च नैव कुर्यात् ।

**अपेतौषधसंरम्भं निर्वृतं नयनं यदा ।**
**व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा ॥ २७ ॥**

अपेतोऽपगत औषधसंरम्भो भेषजक्षोभो यस्य नेत्रात्तदेवमपेतौषधसंरम्भम् । अत एव निर्वृतमपेतदुःखानुबन्धि यदा लोचनं स्यात्तदा व्याध्यादियोग्यैर्जलैः प्रक्षा-लयेत् । तत्र व्याधिरभिष्यन्दादिः । दोषो वातादिः । ऋतुर्वसन्तादिः ।

**दक्षिणाङ्गुष्ठकेनाऽक्षि ततो वामं सवाससा ।**
**ऊर्ध्ववर्त्मनि सङ्गृह्य शोध्यं वामेन चेतरत् ॥ २८ ॥**

ततो नयनप्रक्षालनादनन्तरं दक्षिणाङ्गुष्ठेन सवस्त्रेण वामं नयनमूर्ध्ववर्त्मनि सम्यगादाय शोधनीयम् । वामेनाऽङ्गुष्ठेन सवाससेतरद् दक्षिणमूर्ध्ववर्त्मनि सङ्गृह्य शोध्यम् ।

किमिति शोध्यमित्याह--

**वर्त्मप्राप्ताञ्जनाद्दोषो रोगान्कुर्यादतोऽन्यथा ।**

अतोऽन्यथाऽशोध्यमाने वर्त्मनि प्राप्तं च तदञ्जनं वर्त्मप्राप्ताञ्जनं, तस्माद्दोषो रोगान् कुर्यात् । तस्मात्तच्छोध्यं नयनम् ।

**कण्डूजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः ।**

'कण्डूश्च जाड्यं चेति समाहारद्वन्द्वः' । तस्मिन् सति तीक्ष्णमञ्जनं योजयेत् ।



अथवा तीक्ष्णं धूमं योजयेत्।

**तीक्ष्णाञ्जनाऽभितप्ते तु पूर्णं प्रत्यञ्जनं हितम्॥ २९॥**

पुनस्तीक्ष्णेनाञ्जनेनाऽभितप्ते लोचने पूर्णं प्रत्यञ्जनं चोक्तं हितमिति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां त्रयोविंशोऽध्यायः॥ २३॥

# चतुर्विंशतितमोऽध्यायः।

अस्मादनन्तरं चतुर्विंशाऽध्यायारम्भं आश्चोतनाञ्जनाभ्यां हि नयनस्य प्रायो दौर्बल्यमतस्तर्पणादेरुपयोगो युक्त इत्याह—

**अथाऽतस्तर्पणपुटपाकविधिमध्यायं व्याख्यास्यामः।**

तर्पणं च पुटपाकश्च तर्पणपुटपाकौ, तयोर्विधिस्तम्। शेषं पूर्ववत्।

**नयने ताम्यति स्तब्धे शुष्के रूक्षेऽभिघातिते।**
**वातपित्तातुरे जिह्मे शीर्णपक्ष्माऽऽविलेक्षणे॥ १॥**
**कृच्छ्रोन्मीलसिराहर्षसिरोत्पाततमोऽर्जुनैः।**
**स्यन्दमन्थाऽन्यतोवातवातपर्ययशुक्रकैः॥ २॥**
**आतुरे शान्तरागाश्रुशूलसंरम्भदूषिके।**
**निवाते तर्पणं योज्यं शुद्धयोर्मूर्धकाययोः॥ ३॥**
**काले साधारणे प्रातः सायं चोत्तानशायिनः।**

चक्षुषि म्लायति सति तथा स्तब्धादिगुणे तर्पणं कार्यम्। तथा शीर्णे पक्ष्मणी यस्य तदेवम्। आविलमस्पष्टमीक्षणं दर्शनं यस्य तदेवम्। शीर्णपक्ष्म च तदाविलेक्षणं च तस्मिन्। तथा कृच्छ्रोन्मीलादयोऽक्षिरोगेषु वक्ष्यन्ते। कृच्छ्रोन्मीलश्च सिराहर्षश्च सिरोत्पातश्च तमश्चाऽर्जुनश्च तैरातुरे। तथा स्यन्दश्च मन्थश्चान्यतोवातश्च वातपर्ययश्च शुक्रकं च तैरातुरे। तथा नस्याऽनर्हे। यतो वक्ष्यति— 'तर्पणं पुटपाकं च नस्याऽनर्हे न योजयेत्'। तथा शान्ताः शमं गता रागाश्रुशूलसंरम्भदूषिका यस्मिन्नयने तस्मिन्। कीदृशि स्थाने? निवाते विगताऽनिले। उपलक्षणं चेदम्। विगतातपरजोधूमादिका इत्यपि द्रष्टव्यम्। कीदृशयोर्मस्तकदेहयोः। शुद्धयोर्यथायोगं वमनविरेचननस्यैः कृतशुद्ध्योरित्यर्थः। कीदृशे काले? साधारणे वसन्तादिके। कदा? सायं प्रातर्वा दोषदूष्याद्यपेक्षया। कीदृशस्याऽऽतुरस्य? उत्तानशायिन इति। शयनस्थस्योत्तानस्येत्यर्थः।

**यवमाषमयीं पालीं नेत्रकोशाद्बहिः समाम्॥ ४॥**
**द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत्।**
**सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलापितम्॥ ५॥**

यवैर्मिश्रा माषा यवमाषास्ते प्रकृता यस्यां सा यवमाषमयी, ताम्। तादृशीं